THE

# PRINCESS OF WALES SARASWATI BHAVANA TEXTS

EDITED BY

GANGĀNATHA JHA

AND

GOPĪNATHA KAVIRAJ

---

No. 6.



THE

# BHĀVANĀ VIVEKA

---

BENARES
Printed by Rameshwar Pathak, at the Tara Printing Works,

1922

मण्डनमिश्रविरचित:

# भावना विवेक:

(सटीक:)

THE

# BHĀVANĀ VIVEKA

OF

## MANDANA MISRA

WITH

THE COMMENTARY

OF

## BHATTA UMBEKA

EDITED WITH INTRODUCTION

BY

MAHAMAHOPĀDHYAYA GANGANATHA JHA
M. A., D. Litt.
*Principal, Government Sanskrit College, Benares*

---

Printed by Rama [illegible] Pathak, at the Tara Printing Works,
Benares
&
Published under the authority of the Government of the United
Provinces by the Superintendent of the Government Press,
Allahabad.

---

# PREFATORY NOTE.

It is for the first time that the text of Mandana Miśra's Bhāvanā Viveka as well as that of its Commentary by Bhatta Umbeka are being laid before the public In the history of both Mīmānsā and Vedānta the place of Maṇḍana or Sureśvara--the name which he assumed on his conversion--stands almost unique In Vedanta his works, viz, the independent tracts such as Naiṣkarmyasiddhi and Brahmasiddhi, and the Vārtikas on Śankara's commentaries on some Upaniṣads and on his Dakṣiṇāmūrti Stotra have been known for long Of these Brahmasiddhi awaits publication. In Mīmānsā his Vidhiviveka with Vāchaspati's Commentary Nyayakaṇikā has been published Vibhramaviveka still remains to see the light Bhāvanāviveka is the work now given out

Mandana is believed to have been as a Mimānsaka a pupil of Kumārila Bhaṭṭa and as a Vedāntist in later life a disciple of Śankarāchārya. Vāchaspati commented on his Vidhiviveka as well as Brahmasiddhi in Nyāyakaṇikā and Brahmatattvasamīkṣā respectively. It is therefore likely that Mandana lived in the early part of the 9th Century

The text is accompanied by a running commentary attributed to one Bhaṭṭa Umbeka. There is reason to believe, as it will be clear in the Introduction that will follow in part 2, that it is almost the earliest commentary existing on the work

The present edition is based on two Manuscripts

(1) Manuscript marked as क containing both the text and the commentary and belonging originally to the private

collection of Babu Govinda Das of Benares and now in possession of the present editor. It contains 109 leaves (fols 1-32, 1-9, 11-78), with 9 lines per page, and 33 letters per line. Script, Nagari.

(2) Manuscript marked as ख containing only the text belonging to the Library of the India Office, London and lent through the kind offices of Dr F. W. Thomas, the learned Librarian of the said Library. It consists of 20 leaves, (fols 1-2, 4-17, 19-22), with 8 lines per page and 41 letters per line. Script, Nagari.

The Manuscripts are both defective, but an attempt has been made in the direction of ensuring accuracy in the text as far as possible, though the editor is painfully aware of the many imperfections that are still to be found. But considering the extreme rarity of the works and their unique value it is to be hoped that the public will accord to them, even in the form in which they are presented, the welcome which they undoubtedly deserve.

GANGA NATHA JHA.

मण्डनमिश्रकृतः

# भावनाविवेकः

## सटीकः

**संसर्गमोहितधियो विविक्तं धातुगोचरात् ।**
**भावात्मानं न पश्यन्ति ये तेभ्यः स विविच्यते ॥१॥**

यस्य स्फुरन्ति युगपत् सकलाः पदार्था
यश्चैक एव जगदारभते समग्रम् ।
तस्मै जगत्त्रयनताय महेश्वराय
कृत्वा नमः क्रियत एष मया प्रबन्धः ॥ १ ॥

प्रारिप्सितस्य प्रकरणस्य विषयसम्बन्धप्रयोजनान्यस्य च विचारस्य हेतुं तद्बीजं च दर्शयति—**संसर्गेति** ।

विविच्यमाना भावना विषयः । तद्विवेकश्च प्रयोजनम् । ग्रन्थविवेकयोश्च साध्यसाधनभावलक्षणः सबन्धः । मोहितधिय इत्यन्तेन विषयस्यास्पष्टत्वमुक्तम् । संसर्गग्रहणेन च तद्बीजमुपन्यस्तम् । पचतीत्यादिशब्देभ्यो धात्वर्थमंसृष्टैव भावना प्रतीयते न तद्विविक्ता । अतो लाचारक्तमिव स्फटिकं, धात्वर्थसाध्यं मन्यमानेभ्यो भ्रान्तेभ्यः स्वाभाविकसाध्यत्ववर्जितं संयोगविभागात्मकपाकादिधात्वर्थेभ्यो भावासस्पर्शकृतं साध्यत्वमनुभवद्भ्यस्तद्विवेकः प्रतिपाद्यत इति श्लोकार्थः । कर्त्तव्य च पाकादिधात्वर्थेभ्यो भावनाविवेकप्रतिपादनम् । तदभावे "यजेत स्वर्गकामः" इत्यस्य वाक्यस्य 'यागेन भावयेत् स्वर्गम्' इत्येतस्मिन्नर्थे प्रामाण्यं न स्यात् । वक्ष्यति च "तदित्थं यागादिव्यतिरिक्तभावनाभावाद् यागेन भावयेत्स्वर्गमित्यर्थः परिकल्पितः" इति । ननु किं करोति ? पचति इति स्पष्टभावनावचनकरोतिसामानाधि-

---

मीमांसकैकदेशिन. प्रत्याह-संसर्गमोहितधिय इति । संसर्गमोहिताधयः = ऐकाधिकरण्यमोहितधिय' । भावात्मानं = भावनास्वरूपम् ।

तथा ह्याहुः—

सामानाधिकरण्यात्तदर्थभेदाभिधाऽनुमा ।
न तादर्थ्यानुमानाद्धा वृक्षतां शिंशपाश्रुतिः ॥

इह खलु गगनशशविषाणयोरक्रियमाणत्वादभवतोऽभवतश्च घटादेस्तथात्वाद्भवत्यर्थस्य कर्तुः करोतिकर्मता । तथा च भवितुः करोत्यर्थस्य कर्त्ता प्रयोजक इति भवतेः प्रयोजकव्यापारे णिजुत्पद्यमानः करोत्यर्थमवलम्बते । तेन स भावना, करोतिसमानाधिकरणाश्च पचत्यादय इति तेषां तदर्थत्वानुमानम् ।

करण्येन धात्वर्थाद्विविक्ता करोतिवाच्या प्रयोजकक्रियात्मिका भूतिकर्तृकर्मिका भावना प्रतीयत एव । तथोक्तम् —

'सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति ।
सामानाधिकरण्येन करोत्यर्थोऽवगम्यते ॥' इति ।
'नित्यं न भवनं यस्य यस्य वा नित्यभूतता ।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥
तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥' इति ॥

अथ भवतः कथं व्यामोहः इत्याशङ्क्याह—तथा ह्याहुरिति ।

किं करोति ? पचति इति सामानाधिकरण्यात्तदर्थविशेषाभिधायित्वमाख्यातमित्यनुमानं प्रवर्तते न करोत्यर्थाभिधायीति । 'वृक्षः शिंशपा' इत्येवमादौ सामान्यविशेषवचनयोः सामानाधिकरण्यदर्शनात् । न हि वृक्षत्वसामान्यवचनः सन् शिंशपादिशब्दो वृक्षशब्देन सह समानाधिकरणः प्रयुज्यते, अपि तु तद्विशेषवचन इति श्लोकार्थः । तत्राशङ्कां तावद्विवृणोति–इहेति ।

तथात्वात् क्रियमाणत्वादित्यर्थः । 'इह' इत्यादिना 'करोतिकर्मता' इत्येवमन्तेनान्वयव्यतिरेकाभ्यां भूतिकर्तुर्भाव्यत्व विवृतम् । तथा च भवितु-

१ खपुस्तके 'च' शब्दो नास्ति ।

**तदसत् । एकाधिकरणता हि तदर्थभेदाभिधाननिमित्तं नैकार्थ्यमवगमयति । तादृशोः सहप्रयोगानुपपत्तेः । न खलु वृक्षता शिंशपादिशब्दगोचरः अपि त्वभिधेयपरिप्रापिततया गम्यमाना । तदिदमैकाधिकरण्यं स्फुटं विपर्ययसाधनम् ।**

**विशेषाभिधानोन्नयनमेवेत्थमिति चेत्[1] ।**

**न, तस्याः प्रत्ययार्थत्वेनाभ्युपगमात् । प्रत्ययस्य चैकत्वे वाचकभेदाद्दते वाच्यनानात्वायोगात् ।**

**धातवस्तु नानात्मानः करोतिसमानाधिकरणतया तदर्थभेदाभिधायिन इति सांप्रतम् ।**

घटादेः करोत्यर्थस्य यः कर्ता स प्रयोजक इति ग्रन्थयोजना । प्रयोजकव्यापारवचनणिच्प्रत्ययान्तत्वेन भावनाशब्दः करोत्यर्थमाचष्ट इत्यनेन करोत्यर्थस्य भावनात्वं विवृतम् । यदा च भूतिक्रियाकर्तुर्भाव्यत्वं तदा घटक्रियाकर्तुः प्रयोजकत्वम् । भवनक्रियाकर्तुः प्रयोज्यकोटिनिक्षेपात् । एव करोत्यर्थः प्रयोजकव्यापार इति स एव भावनेत्यर्थः ।

इदानीमुत्तरं विवृणोति– तदसदिति ।

ननु 'वृक्षः शिंशपा' इत्यादिवत् करोति पचतीति सामानाधिकरण्यात्तद्विशेषाभिधानोन्नयनमत्र भविष्यति । ततश्च विशेषरूपभावनाभिधायित्वं सिद्धमाख्यातस्येति चोदयति -विशेषेति ।

तत्र परिहारमाह—**न तस्या इति** ।

प्रत्ययः पच्यादिषु कथमनेकमर्थमेको ब्रूयात् । औत्सर्गिकैकार्थ्यापवादकव्युत्पत्तिभेदस्य गवादिशब्दवन्नात्र दर्शनमस्तीत्यैकार्थ्यमेव न्याय्यम् ।

तत्रापि तर्हि किंनिबन्धनं सामानाधिकरण्यमित्यपेक्षिते स्वपक्षस्य व्यतिरेकं दर्शयति—**धातवस्त्विति** ।

---

[1] ख पुस्तके 'शब्द' शब्दो नास्ति ।

अपि च—

भावाभावे प्रयोगस्य द्विधापि खलुदर्शनात् ।
धात्वर्थवर्ति सामान्यं करोत्यर्थमुपागमत् ॥
किं करोति घण्टा ध्वनतीति न ध्वनिजन्यमन्यत् ।
सदपि वा न विवक्षितं धात्वर्थमात्रजिज्ञासनात् ।
तथा च नाभूतप्रादुर्भावनम् । अतो वस्तुतस्तदभावेपि प्रयुज्यमानस्य करोतेरिह कुतस्तदर्थः ।

तथा का क्रिया पाक इति धात्वर्थमात्रस्यात्र जिज्ञासनाद्भावनायास्त्वपरामर्शान्न भावनाविशेषनिमित्तमैकाधिकरण्यम् ।

गम्यमानापेक्षमिति चेत् ? ।

अतश्च न भावनाविशेषाभिधाननिमित्तमैकाधिकरण्यमित्याह—अपिचेति ।

भावनाया अभावेऽप्याख्यातसमानाधिकरणस्य नामसमानाधिकरणस्य च करोतेः प्रयोगो दृष्ट इति धात्वर्थसामान्यमेव करोत्यर्थः । तद्विशेषाश्च पाकध्वननादयो नामाख्यातार्था न भावनाविशेषा इति गम्यते । भावनाभावश्चाख्याते भाव्याभावात्, नाम्नि तु तत्प्रतिपादनयोग्यशब्दाभावादिति ।

तत्राख्यातसमानधिकरणस्य करोतेस्तावद्भाव्याभावनिमित्तभावनाभावे प्रयोगमुदाहरति—किमिति ।

अकर्मकत्वाद्धातोरनपेक्षितं कर्म न विद्यत इत्यर्थः ।

नन्वनपेक्षितमपि सुखदुःखादि ज्ञान च कर्मास्तीति कथं भाव्याभाव इत्याशङ्क्याह—सदपीति ।

विद्यमानमप्यनपेक्षितत्वादसंबध्यमानं न भाव्यमित्यर्थः ।

इदानीं नामसमानाधिकरणस्य करोतेर्भावनाप्रतिपादनयोग्यशब्दाभावनिबन्धनभावनाभावे प्रयोगमाह—तथेति ।

नन्वत्रापि गम्यमानभावनाविशेषनिबन्धनमेव सामानाधिकरण्यमिति नास्ति व्यभिचार इति चोदयति—गम्यमानेति ।

**न, तिङन्तेष्वपि प्रसङ्गात् ।**

**प्राधान्यात्तिङन्तेष्वभिधेयत्वमिति चेत् ।**

**नेहापि तद्विशेषप्रश्नाङ्गात्वर्थस्य तल्लक्षणार्थत्वात्प्राधान्यमभिन्नम् ।**

**अतः सकलधात्वर्थानुयायिनः करोतेः तत्सामान्यमर्थो नाभूतप्रादुर्भावनमिति शब्दप्रवृत्तिविदः प्रतिपेदिरे।**

**तथा चोचुः "क्रियावचनो धातुः। कथं ज्ञायते क्रियावचनाः पचत्यादयः इति?, यदेषां करोतिसामानाधिकरण्यम्। कृभ्वस्तयः क्रियासामान्यवचनाः, क्रियाविशेषवचनाः पचत्यादयः" ।**

**अथ मतं न[२] भाव्यरहितो धात्वर्थः। सर्वेण तेन किंचिदसज्जन्यते ।**

तत्र परिहारमाह—**न तिङन्तेष्विति ।**

तद्यत्र गम्यमानभावनानिबन्धनमैकाधिकरण्यं ततस्तिङन्तेष्वपि तथैव स्यादिति न तत्र सामानाधिकरण्याद्भावनाभिधानं सिध्येत् । अथ प्राधान्यप्रतिपत्त्यनुगृहीतं सामानाधिकरण्यमभिधेयत्वे हेतुः । तच्च तिङन्तेष्वस्तीति युक्ता व्यवस्थेति चोदयति—**प्राधान्यादिति ।**

परिहारमाह—**नेहेति ।**

प्राधान्यप्रतिपत्त्यनुग्रहस्य तिङन्तवन्नाम्न्यपि विद्यमानत्वादभिधेयत्वप्रसङ्ग इत्यर्थः ।

अतो भावाभावे दृष्टप्रयोगस्य करोतेः सकलधातुसमानाधिकरणस्य धात्वर्थसामान्यमेवार्थो न भावनेति दर्शयति—**अत इति ।**

अमुमेवार्थं वृद्धमतेन दर्शयति—**तथा चोचुरिति ।**

ननु चान्योत्पादनस्वभावत्वाद् धात्वर्थानां सर्वत्र भावनास्तीति क्वचिदभिधेयभावनाविशेषणनिबन्धनं सामानाधिकरण्यं क्वचिद् गम्यमानभावनाविशेषणनिबन्धनमिति नास्ति कश्चिद्दोष इति चोदयति—**अथ मतमिति ।**

---

१ खपुस्तके 'यथा' इति पाठः । २ खपुस्तके 'न हि' इति पाठः ॥

तत्र,

सर्वत्र यदि धात्वर्थे भाव्यं मैवास्तु भावना।
स्वर्गभूतिसमर्थोऽन्यो व्यापारः क्वानुपागतः॥

भाव्यभवनसमर्थो हि व्यापारो भावना। धात्वर्थ एव चेत् कस्यचिदात्मलाभानुकूलात्मा स एव भावनाऽस्तु न तदतिरिच्यमानशरीरा।

एवं चेन्न खलु स्वर्गादिफलोदयानुकूलं यागादिधात्वर्थभेदप्रभाव्यं व्यापारान्तरमुपलभामहे यं भावनाशब्दोऽभिनिविशेत।

यागादय एव तु स्वर्गादिफलोदयाय चोदितास्तत्समर्थतया तथा व्यपदेशमर्हन्ति।

अव्यापाररूपत्वाद्धात्वर्थस्य नैवमिति यदि मन्येत।

वक्तव्यः स व्यापारो यदि समीहितकार्योपजननानुगुणः साध्यस्वभावो धर्मभेदस्तदर्पणया तथा व्यपदेश्यो न धात्वर्थस्तथाविधत्वमतिवर्तेत इति।

तत्र परिहारमाह—तत्रेति।

सत्यमन्योत्पत्तिसमर्थो धात्वर्थो न तु तद्व्यतिरिक्ता भावनाऽस्ति। तेषामेव तादात्म्येन तथा व्यपदेश्यत्वादित्यर्थः।

एतदेव विवृणोति—भाव्येति।

पूर्वोक्तमुपजीव्याह—एवं चेदिति।

यागादीनामेव तु चोदितत्वेन फलोत्पत्तिसमर्थाना फलोदयनिष्ठव्यापारवचनभावनाशब्दवाच्यत्वामिति दर्शयते- -यागादय इति।

ननु संयोगविभागात्मकत्वेनाव्यापारभूतत्वाद्धात्वर्थस्य कथमिव व्यक्तप्रयोजकव्यापारवचनभावनाशब्दवाच्यत्वामिति चोदयति- -अव्यापारेति।

अत्र परिहारमाह—वक्तव्य इति।

**अथ परिस्पन्दस्तदा तदात्मना धात्वर्थानामविहतं भावनात्वम् ।**

**अस्पन्दमानसाधनेषु 'आस्ते' 'शेते' 'यजते' 'जानाति' इति चात्मकर्तृकेषु तदभावप्रसङ्गः ।**

**व्यापारोऽपि भावना ।**

अन्योत्पादकस्वभावत्वाद्धात्वर्थानां समीहितकार्योदयानुगुण्यं तावदस्ति गोदोहनादिवत्सिद्धत्वाभावात् साध्यता चेत्येवंलक्षणव्यापाराभ्युपगमे व्यापारत्वमभ्युपपन्नम् । अथ परिस्पन्दो व्यापारः । तत्रापि गमनादिधात्वर्थानां स्पन्दात्मकत्वाद्व्यापारत्वमविरुद्धमित्याह--**अथेति** ।

परिस्पन्दलक्षणव्यापाराभ्युपगमे चायमपरो दोष इत्याह—**अस्पन्दमानेति** ।

सर्वगतत्वादात्मनः संयुज्यमानवियुज्यमानदेशाभावेन चलितुमसामर्थ्यान्न चलनात्मकः स्पन्दः सम्भवतीत्यर्थः । 'आस्ते' इत्येवमाद्याख्यातार्थानां नैसर्गिकाचलनात्मत्वेन सर्वगतात्मकर्तृकत्वेन च परिस्पन्दस्याभावः । हेतुसमुच्चयार्थश्चकारो भिन्नक्रमश्च द्रष्टव्यः । यद्यपि 'आस्ते' इत्यस्यान्यकर्तृत्वमपि सम्भवति तथाप्यात्मकर्तृकत्वमस्तीत्युदाहृयते । यदि वा 'आस्ते' इत्येवमादीनां शरीरकर्तृकत्वमभ्युपगम्य कारकनिष्ठत्वेन परिस्पन्दाभाव उक्तः । आत्मकर्तृकेषु चेत्यस्य 'जानाति' इत्येतदुदाहर्त्तव्यम् । 'सङ्कल्पयति' 'इच्छति' 'प्रयतते' इत्यादिविषयसमुच्चयार्थश्चकारः । अथवा 'शेते' 'यजते' 'जानाति' इति अस्पन्दमानसाधनेषु आत्मकर्तृकेषु च तदभावप्रसङ्ग आस्त इति ग्रन्थयोजना । परिस्पन्दाभावप्रसङ्गाख्यदूषणं विद्यत इत्यर्थः ।

अपरेषां तु दर्शनम्—आत्मकर्तृकः प्रयत्नो भावना भूतादिकर्तृका-यागादिधात्वर्थाद्व्यतिरिक्तः । स चाख्यातप्रत्ययवाच्यः । तस्य स्पन्दमानास्पन्दमानसाधनेषु 'पचति' 'गच्छति' 'आस्ते' 'शेते' 'यजते' 'जानाति' इत्यादिषु च सम्भवात् सर्वत्राख्यातमर्थवदिति नास्त्यव्याप्तिदोष । तच्चैतद् दूषणायोपन्यस्यति ।

आत्मकर्तृकमेवाह—**व्यापार इति** ।

**कर्त्रन्तरेऽस्य नाख्यातं धीसाम्यान्नोपचारतः ।**

**योऽपि मन्यते सकलपुरुषप्रत्यात्मवेदनीयश्चेतनस्यात्मन औदासीन्यप्रत्युपलक्ष्यमाणात्मा प्रयत्नादिशब्दप्रवेदनीयो व्यापारो भावना ।**

**कर्त्रन्तरेऽस्य नाख्यातं प्रयुज्येत कूलं पतति रथो गच्छति अग्निर्ज्वलति ।**

**अपि च धातुगोचरनिर्वृत्तिपर्यन्तत्वाच्च कर्मता सर्वत्र तस्य ।**

दूषणमाह--**कर्त्रन्तरे इति ।**

'कूलं पतति' 'रथो गच्छति' 'अग्निर्ज्वलति' इत्यादिकूलादिकर्तृषु प्रयत्नाभावादाख्यातप्रयोगानुपपत्तिरित्यर्थः । ननु चाश्वादिगत प्रयत्न रथादिषूपचर्य्य 'रथो गच्छति' इत्यादिप्रयोगो भविष्यति । यथा देवदत्तादिगत श्रोतृत्वं क्रोशन च प्रावसु मञ्चेषु चोपचर्य्य 'शृण्वन्ति प्रावाणः' 'मञ्चाः क्रोशन्ति' इतिवत्प्रयुज्यत इत्याशङ्क्याह—**धीसाम्यादिति ।**

यत्र चौपचारिकः प्रयोगस्तत्रौपचारिकबुद्धिर्दृष्टा । यथात्रैव 'मञ्चाः क्रोशन्ति' इति, नत्वत्र तथा; 'रथो गच्छति' 'करी गच्छति' इत्यनयोरविशेषादित्यर्थः ।

अत्र पूर्वपक्षं तावद्विवृणोति—**योऽपीति ।**

सकलपुरुषप्रत्यात्मवेदनीयश्चेतनस्यात्मन इति मानस प्रत्यक्षमुपन्यस्तम् । प्रत्यक्षदार्ढ्यार्थमौदासीन्यप्रत्युपलक्ष्यमाणात्मेत्युपलक्षितप्रयत्नस्वरूपं दर्शयति प्रयत्नादिशब्दप्रवेदनीयो व्यापारो भावनेतिपर्यायप्रसिद्धिमाह । इदानीमुत्तरं विवृणोति—**कर्त्रन्तरे इति ।**

न च 'शृण्वन्ति प्रावाणः' इतिवत्समारोपेण प्रयोग । प्रत्ययस्याविलक्षणत्वात् । न हि 'रथो गच्छति' 'करी गच्छति' इति प्रत्ययो विशिष्यत इति । इतश्च न पुरुषप्रयत्नो भावनेत्यभ्युपगन्तुमुचितमित्याह—**अपिचेति ।**

न परः करणाभिमतेऽप्यसाविति ।

पुरुषप्रयत्नो हि धात्वर्थनिर्वृत्तिमात्रापवर्गात् । सर्वत्र काम्ये नित्ये नैमित्तिके च तत्कर्मताप्रसङ्गः व्यापारविशेषानुपलम्भात् न हि काम्ये प्रयोगे करणाभिमतस्य धात्वर्थस्य परस्तात्तत्साध्यस्वर्गादिफलविशेषसाधनप्रयत्नभेदः समस्ति ।

अपूर्वे तु न प्रयत्नभेदः । न च[1] कर्तृव्यापारः करणव्यापारस्वाभ्युपगमात्[2] ।

स्वर्गादिफलकर्मिका धात्वर्थकरणिका भावना भवद्भिरभ्युपगम्यते । पुरुषप्रयत्नश्च धात्वर्थनिर्वृत्तिपर्यन्तत्वात् तत्कर्मक एव दृश्यते । ततश्च काम्ये नित्ये नैमित्तिके च प्रयोगे धात्वर्थकर्मिकेव भावना स्यान्न फलकर्मिका । न च धात्वर्थकर्मकात्प्रयत्नादपरः प्रयत्न उपलभ्यते, यः फलकर्मकः स्यात्, इत्याह—न पर इति ।

यत्रापि धात्वर्थस्य कामाधिकारे करणत्व सर्वमीमासकैरिष्टं तत्रापि प्रयत्नान्तरानुपलब्धेर्न फलस्य कर्मत्व वक्तु शक्यत इत्यर्थः ।

अमुमेव श्लोकं विवृणोति—पुरुषेति ।

ननु धात्वर्थकर्मकात्प्रयत्नादन्यदपूर्वं नामास्ति तत् फलकर्मकमपूर्वप्रयत्ननिष्पादितधात्वर्थकरणकं भविष्यति इत्याशङ्क्याह— अपूर्वमिति ।

पुरुषप्रयत्नो भावनेत्युक्तम्, अपूर्वं तु न प्रयत्नभेदः शक्तिरूपत्वाभ्युपगमात् । अतो भावनात्मन्यपूर्वे कथमिव फलधात्वर्थयोः कर्मकरणभावः स्यात् अथापि प्रयत्नात्मकमपूर्वम्, तथापि कर्तृव्यापारस्वभावत्वाभावादभावनात्व कर्तृव्यापारस्य प्रयत्नस्य तत्त्वाभ्युपगमादित्याह—न चेति ।

कथमित्यपेक्षिते सत्याह—करणेति ।

---

१ 'च' शब्दो नास्ति, २ व्यापाराभ्युपगमादिति पाठ

अन्यथा व्यापारसंकरात्कारकभेदाभावप्रसङ्गादित्यलमतिप्रसङ्गेन ।

कर्मणो भावभेदं यः फलावधितया वदेत् ।
तस्यादृष्टफलेष्विष्टमनुष्ठानं न युक्तिमत् ॥

धातुर्हि कर्मस्वरूपमात्रेणोपादत्ते आख्यातोपसंदानात्तु भावनात्मनावगम्यते । तथाहि यावता कर्मणः फलोत्पादनिचयेनेष्टमर्थं साधयति तावत्याख्यातं प्रयुज्यते । अतस्तेन तेन फलोत्पादनिचयेनावच्छिद्यमानः स स कर्मक्षणोत्पादनिचयस्तेन तेनाख्यातेनाभिधीयते । तदिदं फलावधिकं कर्म भावनात्मतयाऽवसीयते । नाभाव्यमानं फलं भावनायालमिति[१] । फलोत्पादिकावस्थाऽऽख्यातार्थः[२] ।

यथोक्तम्—यस्य च शब्दस्यार्थेन फलं साध्यते तेनापूर्वं कृत्वेति । न च य एव करणव्यापारः स एव कर्तृव्यापार इति साम्प्रतम् । व्यापारभेदनिबन्धनत्वात्कारकभेदस्य । तथाहि ज्वलनधारणाधिश्रयणादिव्यापारभेदनिबन्धनः कारकभेदो दृश्यते ।

व्यापारसंकराभ्युपगमे तु कारकभेद एव न स्यादित्याह--अन्यथेति।

अपर मतम्—फलपर्यन्तं कर्म कर्तव्यतया चोद्यते ''यजेत स्वर्गकामः'' इत्येवमादिभिर्वाक्यैः । तत्र कर्मस्वरूपं धात्वर्थः, फलपर्य्यन्तत्वं त्वाख्यातार्थः । सा च भावनेति ।

तदेतदपि निराकरणाय दर्शयति—कर्मण इति ।

एवमुपन्यस्य निराकरोति—तस्येति ।

अदृष्टफलेषु यागादिषु फलपर्यन्तत्वरूपस्याप्रतीयमानत्वादव्युत्पन्नविषयस्वरूपो नियुक्तोऽपि नानुतिष्ठेदित्यर्थः ।

तत्र निराकार्यस्वरूपं विवृणोति—धातुर्हीति ।

---

१ 'भाव्यतया' इति'ख'पुस्तके पाठः । २ फलोत्पादिका च अवस्था इति'ख'पुस्तके पाठः।

**तथा यतेत यथा किञ्चिन्नुवर्तीति दर्शितम् ।**

**एवमवस्थाभेदेन भावनाकर्मणोर्भेदः ।**

**उक्तं च-पूर्वापरीभूतं भावमाख्यातमाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् ।**

**तत्र प्रतिक्षणमपवर्गवतः कर्मणः क्वावुपक्रमापवर्गौ। फलापेक्षया तु कल्प्यते इति यो वदेत, तस्य प्रत्यक्षफलेषु कर्मसु काममारम्भविरामौ कल्प्येते पुरस्तात्परस्ताच्च तत्पर्यन्तकर्मक्षणप्रचयपरिज्ञानात् । अदृष्टफलकर्त्वानिरूपितफलपर्यन्तपरिमाणेष्वेषु कथं प्रवर्तते ? न हि नियुक्तोऽप्यप्रासङ्गविपर्यविशेषः प्रवर्तितुमर्हति[2] ।**

**प्रवृत्तौ वा पुनःफलादर्शनादकृतशास्त्रार्थमात्मानमनवबुध्यमानो न विरन्तुमर्हति[3] ।**

भाष्यकारेणापि च फलपर्यन्तस्य कर्मणो भावनात्मना दर्शितेत्याह—तथेति ।

तस्मादवस्थाभेदेन भावकर्मणोर्भेद इति दर्शनमुपसंहरति- एवमवस्थाभेदेन भावनाकर्मणोर्भेद इति किं दर्शितम् इति अपेक्षित चोक्तम् ।

अन्यैरप्येवमुक्तमित्याह—उक्तं चेति ।

कथं पुनरेतावता फलपर्यन्तत्वमुक्तमित्यपेक्षित सत्याह- तत्रेति ।

प्रतिक्षणमनेकसमाप्तिसंभवे सत्येका समाप्तिरुपक्रमश्च फलापेक्षयैव घटत इत्यर्थः ।

एवं निराकार्यस्वरूपं विवृत्येदानीं निराकरणं विवृणोति—तस्येति ।

दृष्टफलेषु पाकादिषु कर्मसु ओदनादिफलपर्यन्तत्वस्य कर्त्रन्तरे दृष्टत्वात् स्वयं चानुतिष्ठतस्तदभिधेयत्वावगममभवात्प्रवृत्तिः, अदृष्टफलेषु तु यागा-

---

[1] खपुस्तके 'यथा परिकिञ्चित' इति पाठः । [2] ख पुस्तके 'प्रवर्तितुं प्रभवति' इति पाठः । [3] खपुस्तके 'पुरः फलदर्शनात् कृतशास्त्रार्थमात्मानमनवबुध्यमानो' इति पाठः ।

**शास्त्रात्फलोत्पत्तिं प्रतिपद्य विरंस्यतीति चेत् ।**

**न, कृतशास्त्रार्थस्य फलोत्पत्तेः, फलोत्पत्त्या च कृतशास्त्रार्थत्वादितरेतराश्रयप्रसङ्गादित्यलमतिप्रसङ्गेन । प्रकृतमनुसरामः ।**

**धातुप्रत्यययोर्वाच्ये प्रतीयेते न हि क्रिये ।**

**संबन्धो नावकल्प्येत द्वयोः साध्याभिधायिनोः ॥**

दिषु फलपर्यन्तकर्मलक्षणप्रचयपरिमाणस्य कर्त्रन्तरेऽनवगमान्न प्रवर्तेत । न हि विधिशतेनाप्यप्रसिद्धेष्वर्थेषु प्रवर्तयितुं शक्यते । यदि विधिविभक्त्या कथंचित्प्रवृत्त । ततो यावत्फलं नोपलभेत तावदकृते शास्त्रार्थे कथं निवर्तेत इत्याह—**प्रवृत्तौ वेति** ।

ननु यद्यपि प्रत्यक्षादिना फलं नोपलभते तथापि साङ्गप्रधानानुष्ठाने सति शास्त्रादेव फलमुत्पन्नमित्यवगम्य विरंस्यतीति चोदयति—**शास्त्रादिति।**

तत्र परिहारमाह—**न कृतेति** ।

शास्त्रादप्येतदेवावगम्यते—शास्त्रार्थे संपादिते फलं लभ्यते इति । फलपर्यन्तं च कर्म शास्त्रार्थ इति तत्र दर्शनम् । न च प्रत्यक्षादिना फलेऽनवगते शास्त्रार्थोऽस्माभिरनुष्ठित इत्यवगमः संभवति । तेन फलोत्पादे शास्त्रार्थानुष्ठानं शास्त्रार्थानुष्ठानाच्च फलोत्पत्तिरिति दुरुत्तरमितरेतराश्रयमापद्यते । ननु साङ्गे प्रधानेऽनुष्ठिते सत्यनिवर्तमानः किमन्यत्कुर्यात् । अतो युक्त एव विरामः । उच्यते—न साङ्गं प्रधानमनुष्ठेयमपि तु फलपर्यन्तं, तेन यावत्फलं नोपलभेत तावदनुष्ठानमिति बलादापद्येतायास इत्यदोषः । प्रकृतमनुसराम इत्यवस्थाभेदपक्षाद्भिन्नमत्यन्तव्यतिरेकपक्षं दूषयितुं गृह्णीम इत्यर्थः । इतश्च न धात्वर्थव्यतिरिक्ता क्रियात्मिका प्रत्ययवाच्या भावनेत्याह—**धात्विति ।**

यदि प्रत्ययः क्रियान्तरमाचक्षीत ततो धातुप्रत्यययोर्वाच्यं क्रियाद्वयं प्रतीयेत । न तु क्रियमाणद्रव्यनिष्ठं क्रियाद्वयमुपलभामहे । अतो न प्रत्ययः क्रियावचन इति । द्वयोश्च धातुप्रत्यययोः क्रियावचनयोः साध्याभिधायित्वेन परस्परनिरपेक्षत्वात्समभिव्याहारोऽपि न स्यादित्याह—**सम्बन्ध इति ।**

१ खपुस्तके 'प्रमङ्गेन' इत्येव पाठः ।

येषां तूत्पत्ताविव्याख्यातवर्ती धात्वर्थः साध्य-क्रियात्मोवेद्यते । यदि च प्रत्ययः क्रियान्तरमाचक्षीत क्रियाद्वयं प्रतीयेत । ओदनं पचति करोति घटमिति यथा ।

तस्माच्च धात्वर्थव्यतिरेकिण्याख्यातेषु क्रियास्ति ।

साध्यस्य च साध्यान्तरेण संबन्धादर्शनात्तदभि-धायिनोः प्रकृतिप्रत्यययोः समभिव्याहारानुपपत्तिः ।

करणत्वाद् धात्वर्थस्यानुपालम्भ इति चेत्?

न, येषां तूत्पत्ताविति विरोधात् ।

न हि तद्भावनाभिप्रायम् ।

नामपदार्थस्य धात्वर्थसंबन्धे दृष्टार्थताऽपचितसं-बन्धप्रतिपादनार्थत्वात् ।

ननु च धातोः करणार्थत्वात्प्रत्यय एव क्रियावचन इति कुतः क्रिया-द्वयप्रतीतिप्रसङ्गः कथं वा समभिव्याहार इत्याशङ्क्याह—येषामिति ।

न च प्रतीयते ।

येषां तूत्पत्ताविति भावार्थाधिकरणसूत्रे धात्वर्थस्य साध्यात्मनः क्रिया-त्वमुक्तमिति कुतः करणत्वमस्य । ततश्च क्रियान्तरप्रतीतिः स्यात् । उत्तरार्द्धं विवृणोति साध्यस्य चेति ।

ननु च करणत्वाद्धात्वर्थस्य क्रियाकारकवचनयोरुपपन्न एव समभिव्याहारः। न च सूत्रविरोधः । तस्य भावनासाध्यत्वप्रतिपादनपरत्वादित्यभिप्रायेण चोदयति—करणत्वादिति ।

तत्र धात्वर्थस्य साध्यत्वप्रतिपादनपरं सूत्रं मन्यमानः परिहारमाह—न येषामिति ।

ननु भावनाभिप्रायमेव तद्वचनं भविष्यतीत्याशङ्क्याह—न हीति ।

कस्मादित्याह—नामेति ।

१ खपुस्तके 'येषामुत्पत्ता' इति पाठः । २ 'असम्बन्धात्' इति खपुस्तके पाठः ।

अपिच—

**न भावेनापि धात्वर्थे काष्ठैरिति समागमः ।**
**अक्रियात्वादनवरोधाच्छाब्दत्वात्करणस्य च ॥**

**न तावद्धात्वर्थसंबन्धिता काष्ठानाम् । कारकाणां क्रियापेक्षितामनात्मना कारकान्तरेण संगमायोगात् । नापि भावनासंबन्धिता तस्याः कारकान्तरावरुद्धत्वात् । नोप्यंशान्तरतया संबन्धः । शाब्दत्वात्करणत्वस्य । तदेवं यत्र करणभावः क्रियायां तस्या अवरुद्धत्वाद्धात्वर्थे चाक्रियात्मन्यकरणत्वात्काष्ठैः पचतीति सम्बन्धाभावः ।**

**अर्थाक्षिप्तभावनाद्वारः संबन्ध इति चेत् ?**

नामपदार्थस्य व्रीह्यादेर्धात्वर्थसम्बन्धे या दृष्टार्थता तदपेक्षितमाध्यसाधनसम्बन्धप्रतिपादनार्थत्वात्तस्य सूत्रस्य । एतदुक्तं भवति—धात्वर्थस्य यागादेर्व्रीह्याद्यर्थत्वे सत्यदृष्टार्थता स्यात् । व्रीह्यादीनां तु यागार्थत्वे दृष्टार्थत्वम् । कथम् ? व्रीह्यादिद्रव्यसाध्यत्वाद्यागस्य । एतेन व्रीह्यादयो यागस्वरूपं निष्पादयन्तो दृष्टार्था भवेयुरिति धात्वर्थादेव फलापूर्वमभ्युपगतमिति । धात्वर्थकरणत्वाभ्युपगमं चायमपरो दोष इत्याह—**अपिचेति** ।

धात्वर्थभावनयोः कारकत्वेन कारकान्तररोधेन च काष्ठादेः कारकान्तरस्य सबन्धो न सभवतीति । न चेतिकर्तव्यतात्मना काष्ठानां भावनानुप्रवेशः काष्ठैः पचतीतिशब्दात्करणत्वबुद्धेर्द्रव्याणां कार्यभावनाग्रहणात् । अतः काष्ठैः पचतीति समभिव्याहारो न स्यादिति श्लोकार्थः । एतमेव श्लोकार्थं विवृणोति—**न तावदिति** ।

ननु यद्यपि फलकर्मकश्रौतभावनासबन्धो न सभवति तथापि करणत्वाक्षिप्तधात्वर्थभावनाद्वारकः सबन्धो भविष्यतीति चोदयति **अर्थाक्षिप्तेति** ।

---

१ खपुस्तके 'नचाशान्तर' इति पाठः । २ 'करणता' इति खपुस्तके पाठः ।

**न, अव्यवधानेन सम्बन्धबोधात्। न हि मृदा घटं, काष्ठैः पचतीति समः सम्बन्धावगमः। एकत्र तैराकाङ्क्ष्यादन्यत्रान्यव्यपेक्षत्वात्।**

**विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्प्यते।**

**कः प्रत्ययार्थो धातूक्तव्यापारे यदि कर्तृना॥**

**अपि च—विक्लिद्यन्ति पचन्तीत्युभयत्र प्रयोजकव्यापारस्य प्रत्ययेनाभिधानात् धातुभ्यां च विक्लित्तेरिति नार्थभेदः स्यात्।**

तत्र परिहारमाह—**न अव्यवधानेति।**

अर्थाक्षिप्तभावनाद्वारसंबन्धाभ्युपगमे व्यवहितसंबन्धाभ्युपगमः प्राप्नोति। अपेक्षिताश्रुतक्रियाध्याहारपूर्वकत्वात् मृदा घटमितिवत्। न चेह तथा। अश्रुतक्रियानपेक्षणात्। यथा घटम् इत्युक्ते करोतीत्यश्रुता क्रियाऽपेक्ष्यते नैवमत्रेत्यर्थः।

यदि च प्रयोजकव्यापारात्मिका धात्वर्थव्यतिरिक्ता प्रत्ययवाच्या भावनाऽभ्युपगम्यते तदा विक्लिद्यन्ति पचन्तीत्यनयोः शब्दयोर्लोकप्रसिद्धोऽर्थभेदो न स्यादित्याह विक्लिद्यन्तीति।

उभयत्र प्रयोजकव्यापारवचनत्वात्प्रत्ययस्य धात्वोर्विक्लित्त्यर्थत्वादित्यर्थः। ननु विक्लिद्यन्तीति तण्डुलकर्तृको व्यापारोऽभिधीयते पचतीति च देवदत्तादिकर्तृकः। अतः कथमेकार्थ्यमित्याशङ्क्याह—**क इति।**

नैव कर्तृभेदः सम्भवति। यदि साधननियोजकस्य कर्तृत्वम्। उभयत्र देवदत्तादीनां कर्तृत्वात्तद्व्यापाराभिधानप्रसङ्गः। अथ प्राधान्येन धात्वभिधीयमानव्यापारस्य कर्तृत्वं, तथापि देवदत्ततण्डुलानां मत्यपि कर्तृत्वे देवदत्तादिव्यापारात्मिकाया भावनाया धातुनैवाभिहितत्वात्किं प्रत्ययवाच्यं भविष्यतीति न विद्मः। कथं विशेषो न कल्प्यत इत्यत आह—**अपि चेति।**

१ 'अव्यवधानसम्बन्ध' इति खपुस्तके पाठः।

नन्वस्ति तावत् कर्तृभेदेन व्यापारभेदः, तदभिधानान्न दोषः । तथाहि—विक्लिद्यन्तीति तण्डुलाः कर्तारः, पचन्तीति देवदत्तादयः ।

पुनर्भवान् कर्तृलक्षणं मन्वैवमाह यदि साधननियोगादिकं कथं तण्डुलानां कर्तृत्वं देवदत्तादय एव कर्तार इति अविशेषप्रसङ्गः । अथागुणतया धातुनाभिधीयमानव्यापारताक इदानीं प्रत्ययार्थः कर्तृव्यापारस्य भावनाया धातुनैवाभिधानात् ।

फलधात्वर्थार्थभावनानात्वाद्धात्वर्थोऽर्थो व्यापारो धातुवाच्यः । फलार्थस्तु धात्वर्थकरणकः प्रत्ययवाच्यः । नैतत्सारम् ।

न हि धात्वर्थकरणः फलभेदप्रभावनः ।

योऽपि व्यवहितफलेषु दृश्यते, सोऽपि हत्यादिधात्वर्थान्तरात्मको न प्रत्ययार्थः ।

उपरितनार्द्धश्लोकशङ्कां दर्शयति—नन्विति ।

कः प्रत्ययार्थ इत्युक्तं विवृणोति—पुनरिति ।

ननु च द्वौ कर्तृव्यापारौ एकः फलकर्मकोऽन्यश्च धात्वर्थकः । द्वयोरपि साध्यत्वात् । न चैकस्मिन् व्यापारे कर्मद्वयसमावेशोपपत्तिः तत्र धात्वर्थकर्मको व्यापारो धातुवाच्यः । तदभिधानाच्च धात्वभिहितव्यापारे न संकरो भविष्यति । फलकर्मको धात्वर्थकरणकश्च व्यापार प्रत्ययार्थ इति न प्रत्ययार्थपर्यनुयोगावकाश इति चोदयति—फलेति ।

तत्र परिहारमाह—नैतत्सारमिति ।

'धात्वर्थं फलभेदं च व्यापारो दृश्यतेऽन्तरा ।'

धात्वर्थकर्मकमेवैकं कर्तृव्यापारमुपलभामहे । न ततोऽन्यं धात्वर्थकरणकं

१ 'तयागुणतया' इति खपुस्तके पाठः । २ 'धातुनाभिधा' इति खपुस्तके पाठः ।
३ 'फलाभेद' इति खपुस्तके पाठः । ४ 'हत्यादि' इति खपुस्तके नास्ति ।
५ 'न प्रत्ययार्थः' इति खपुस्तके नास्ति ।

फलार्थ धात्वर्थ अर्थभाव नानात्वात्

**प्रयत्नान्तरजन्मा न प्राचीनधातुगोचरप्रभावनीय इति ।**

**कर्मणा च करोत्यर्थो व्याप्तोऽतस्तदयोगतः ।**

**तदभावः प्रत्ययार्थसाधनेऽपि विभक्तयः ॥**

फलकर्मक वा । अतस्तदवस्थ एव प्रत्ययार्थपर्यनुयोगः । ननु व्यवहितफले श्येनादौ न श्येनादिधात्वर्थं शत्रुमरणं चान्तरा देवदत्तादिकर्तृको हननादिव्यापार उपलभ्यत एव । अतः कथमविशेषेणोच्यते न दृश्यतेऽन्तरेति । स च प्रत्ययवाच्यो भविष्यतीत्याशङ्क्याह **योऽपीति ।**

हननादिधात्वर्थो न भावना । अत. कथमिव प्रत्ययवाच्यः स्यात् । न च तत्र श्येनादिधात्वर्थस्य कारकत्वं, येन करणता स्यात् । चिरनिवृत्ते[1] श्येनप्रयत्नान्तरादेव तदुत्पत्तिरित्याह—**प्रयत्नान्तरेति** । अतो यथैव पाकादेः पचत्यादिधात्वर्थस्य प्रयत्नान्तरजन्मनो न प्रत्ययार्थत्वं तथात्रापीत्यर्थः । यस्तु तत्र पुरुषप्रयत्नः स पाकादिकरणक इव श्येनादिसाधनको न भवतीति "श्येनेन यजेत" इत्यतदाख्यातप्रत्ययार्थत्वं न प्रतिपद्यते । स प्राचीनधातुगोचरप्रभावनीय इति क्वचित्पाठः । तत्राप्ययमर्थः । यद्यपि व्यवहितफलेषु श्येनादिषु व्यापारान्तरं प्रत्ययवाच्यमस्ति तथापि स कर्तृव्यापारः पचत्यादिधातुगोचरप्रभावनीय एव । न हि द्वितीय फलकर्मकोऽस्ति यः प्रत्ययवाच्यः स्यात् । अतस्तदवस्थमेव प्रत्ययानर्थक्यम् । धातुगोचरः प्रभावनीयो यस्येति विग्रहः । पाकादिधात्वर्थकर्मक इति यावत् ।

इतश्च न क्रियान्तरं प्रत्ययवाच्यमस्तीत्याह- **कर्मणेति** । क्रियमाणनिष्ठत्वात्क्रियायास्तदभावे क्रियाभाव इत्यर्थः । यथोक्तम्

'करोतिः क्रियमाणेन न काश्चत्कर्मणा विना ।' इति ।

ननु च 'यजेत स्वर्गकामः' इत्यादावस्त्येव स्वर्गादि कर्म । यत्तु तत्र कर्मबुद्धिर्न जायते, तद् द्वितीयाऽभावात् । तदभावस्तु धात्वर्थकारकविषयत्वात्कारकविभक्तीनाम् । तथा चोखायामोदनं काष्ठैर्देवदत्तः पचेदिति धात्वर्थकांक्षेषु कारकविभक्तयो दृश्यन्ते न भावनाकांक्षेषु स्वर्गयागादिष्वित्याशङ्क्याह— **प्रत्ययार्थेति** ।

---

[1] 'चिरनिवृत्तेर्हिंसनप्र' इति क्वपुस्तके पाठोऽसमीचीन इति बोध्यम् ।

करोतेः सदा सकर्मकत्वात्तद्योगविरहेण करोत्यर्थाभावं प्रतीमः। वह्निविरहेणेव धूमाभावम्।

तथाहि न जातु 'यजेत स्वर्गम्' 'शयीत स्वास्थ्यम्' 'आसीत सुखम्' इति दृष्टचरः संसर्गः।

यदि मन्वीत संगतिसमर्थविभक्तिभेदाभावादेवम्। तथाहि धात्वर्थसाधनावगाहिन्यः सुब्विभक्तयः प्रत्ययार्थनियोगकर्मणि स्वर्गकामादौ तददर्शनात्।

तच्च वार्तम्। एवं सति शेषत्वे सम्बन्धहेतोः षष्ठ्या अव्याहतप्रसरत्वात्।

अस्यायमर्थः प्रत्ययार्थभावनाकारकेऽपि विभक्तिभिर्भवितव्यम्। कर्मणि द्वितीया कर्तृकरणयोस्तृतीयेत्येवमादिविभक्तिविधाने विशेषानुपादानात्। न च स्वर्गे द्वितीया पश्यामः, अतः कर्म नास्तीत्यवगम्यते। तेन सकर्मकत्वात्क्रियायाः क्रियमाणाभावे तदभावः, यथा व्यापकाग्न्यभावे धूमाभाव इत्याह— करोतेरिति।

कर्मयोगाभावमेव दर्शयति—तथाहीति।

संगतिसमर्थविभक्त्यभावात्तथेति शङ्कते—यदीति।

अस्यायमर्थः—प्रत्ययार्थभावनाकर्मणि स्वर्गादौ तत्करणे विधिपर्यायनियोगकर्मणि च यागादौ द्वितीयातृतीये कर्मकरणविभक्ती न दृश्येते। नियोगकर्मत्वं यागादेर्विषयत्वेन। प्रत्ययार्थनियोगकर्मणि स्वर्गकामादाविति व्यधिकरणे सप्तम्यौ। स्वर्गकामादौ शब्दे प्रत्ययार्थनियोगकर्मणि विषये कारकविभक्तिर्न दृश्यते इत्यर्थः। यद्वा सामानाधिकरण्यम्। सिद्धान्तवादिना स्वर्गकामादिशब्दस्य फलपरत्वेनाभ्युपगम्यमानत्वात्। ततश्चायमर्थो भवति। स्वर्गादौ भावनाया विधेश्च कर्मणि कारकविभक्त्यदर्शनादिति। एवमाशङ्क्य दूषणान्तरमाह—तच्च वार्तमिति।

१ 'सर्वदा सकर्मकत्वात्' इति खपुस्तके पाठः। २ खपुस्तके 'तद्विभक्तयः' इति पाठः
३ 'एवं सति सम्बन्धहेतो' इत्येव खपुस्तके पाठः।

**अपिच प्रत्ययार्थभावनाकरणधात्वर्थनामधेयेभ्यो विश्वजिदादिभ्यः करणविभक्तिमीक्षमाणेनेदमध्यवसातुमर्हति।**

**अस्त्येव कर्मसम्बन्धो यजेत स्वर्गकाम इति चेत्?।**

**न, पुरुषविशेषणत्वेन साक्षादसम्बन्धात्।**

**स्वर्गाय यजेतेति साक्षात्संगतिरिति चेत्?।**

**न, अकर्मरूपत्वात् कर्मरूपसम्बन्धाभावस्य च भावनाभिधानाहेतुत्वात्[1]। अकर्मना च चतुर्थीनिर्देशात्।**

वार्तिके इदमागतं न प्रामाणिकमिति। यदि स्वर्गस्य द्वितीयाऽभावात्कर्मणोऽनभिव्यक्तेः कर्मत्वं न विवक्षितं ततः 'कारकाणामविवक्षा शेषः' इति न्यायात्तत्र शेषलक्षणा षष्ठी स्यात् स्वर्गस्य यजेतेति स्वर्गभावनयोः सम्बन्धप्रतिपादिका। न च तामुपलभामहे। ततो न कथञ्चिदुक्तः कर्मसम्बन्ध इत्यर्थः। अपिच भावनाभिधानेऽपि विश्वजिदादौ कारकविभक्तिस्तृतीया दृश्यत एवेत्याह— **अपिचेति।**

ननु स्वर्गकाम इत्यत्र पदे स्वर्गः **श्रूयते**। स तु पुरुषार्थत्वेन साध्यत्वयोग्यः भावना च भाव्याकाङ्क्षिणी। अतोऽस्त्येव कर्मसम्बन्धो द्वितीयामन्तरेणापीति चोदयति— **अस्त्येवेति**। परिहारमाह— **न पुरुषेति**। पुरुषविशेषविशेषणत्वेन स्वर्गादयः श्रूयन्ते न स्वातन्त्र्येण पुरुषान्तरं निरपेक्षत्वात् सापेक्षयापि भावनया न सम्बध्यन्त इत्यर्थः।

ननु सामर्थ्यात्फलार्थित्वावगतेर्नियोज्यपुरुषप्रतिपत्तेरविवक्षितत्वादप्रतीतस्वर्गमात्रप्रतिपादनपरत्वं स्वर्गकामपदस्य ततश्च पुरुषान्तरयोगो नास्ति। एवं चायमर्थो भवति—स्वर्गाय यजेतेति, तदेतच्चोदयति—**स्वर्गायेति**। अत्र परिहारमाह—**न अकर्मेति**।

---

[1] खपुस्तके 'तद्भावनाभावकृतत्वात्' इति पाठः।

**स्वर्गाय याग इति च धात्वर्थेनापि सम्बन्धनात् ।**
**तुल्यार्थत्वं भावयति भवतीति प्रसज्यते ।**
**कः प्रत्ययार्थो धातूक्तव्यापारे खलु कर्तरि ।**

**भावयति घटं (कुम्भकारः, भवति घटमित्यपि प्रस-ज्येत। तुल्यार्थत्वात्। तथाहि एकत्र कर्तुः) कुम्भकारस्य व्यापारं णिजाचष्ट, अन्यत्राख्यातप्रत्यय इति न भिद्यतेऽर्थः ।**

**प्रयोजकव्यापारो णिजर्थः कर्तृव्यापार आख्या-तार्थ इति नानार्थत्वं यदि मन्यते, वक्तव्यस्तेनेह**

न चतुर्थीनिर्दिष्टस्य कर्मत्व गम्यते । 'भुक्तय पचति' तृप्तये भुङ्क्ते' इत्यादौ सत्यपि तृप्त्यादेश्चतुर्थीनिर्देशे ओदनादिकर्मिकैव क्रिया प्रतीयते न तृप्त्यादिकर्मिकेत्यर्थः । न च कर्मणि चतुर्थी स्मर्यते । यदि चतुर्थीनिर्देशात्कर्मसम्बन्धोऽभ्युपगम्येत ततस्तदविशेषाद्धात्वर्थे प्रत्यपि स्वर्गादेः कर्मत्वसम्बन्धप्रसङ्ग इत्याह—**स्वर्गायेति ।**

तस्मात्कर्माभावात्क्रियान्तराभाव इति सिद्धम् । भावनावचनत्वे च प्रत्ययस्य 'भवति''भावयति'शब्दयोस्तुल्यार्थत्व प्राप्नोति । उभयत्र प्रकृति-प्रत्यययोरविशिष्टार्थत्वात् । ततश्च यथा भावयति घटम् इति प्रयुज्यते तथैव 'भवति घटम्' इत्यपि प्रयोग. प्राप्नोतीत्याह— तुल्यार्थेति ।

ननु च भावयतीति णिच प्रयोजकव्यापारविषयत्वाद्भवतीत्याख्यातस्य कर्तृव्यापारविषयत्वेन नानार्थत्वादित्याशङ्क्याह—**क इति ।**

यदि तावत्साधननियोजकत्व कर्तृत्वं तत उभयत्र कुम्भकारस्य तद्भावा-त्तद्व्यापाराभिधानप्रसङ्ग इति तुल्यार्थत्वम् । अथ धात्वभिहितव्यापारत्वं ततः पूर्ववदेव प्रत्ययार्थपर्यनुयोग. । तत्र पूर्वार्द्धं तावद्विवृणाति—**भावयतीति ।**

इदानीमुत्तरार्द्धनिवर्त्या शङ्का दर्शयति —**प्रयोजकेति ।**

१ कंसान्तर्गतो ग्रन्थ. ख पुस्तके नोपलभ्यते ।

कर्तृप्रयोजकभेदः । यदि साधनानां प्रवर्तयिता निवर्तयिता च कर्ता [१] चैकः कुम्भकार एवेति तद्व्यापाराभिधानात्तुल्यार्थत्वम् ।

घटः कर्ता, प्रयोजकः कुम्भकार इति चेत् ? । कथमनीशितुः साधनप्रवृत्तिनिवृत्त्योर्घटस्य कर्तृत्वं तादृशं कुलालमतिक्रम्य ।

अथागुणतो धातुनाऽभिधानादव्यापारत्वम् । कस्तर्हीदानीमाख्यातार्थः ? । भावनाऽभिहितत्वात्तद्व्यापारस्य । न च व्यापारभेददर्शनम् । येन धातुप्रत्यययो[२]र्विभागः स्यात् । करणत्वात् न शब्दतोऽन्यत्वं वा धात्वर्थस्योभयत्राप्यविशिष्टमिति कुर्वार्थं तुल्यार्थत्वम् । अतो न पचत्यादौ भावनाभिधानमिति युक्तम् ।

"एवमन्तस्य भवत्यर्थः केनांशेनाभिधीयते ।"

किंच—

एवमाशङ्क्य विवृण्वन्निदानीमुत्तरार्द्धं विवृणोति — यत्कर्त्रिति । धात्वभिहितव्यापारस्य कर्तृलक्षणं मनसि कृत्वा चोदयति — **घट इति ।** परस्त्वगृहीताभिप्रायः पूर्वमेव कर्तृलक्षणं मन्यमान आह — **कथमिति ।** इदानीं परोऽभिप्रायं प्रकाशयति — **अथेति ।** प्रश्नोत्तरं दर्शयति — **कस्तर्हीति ।** न च फलवाचकधातुवाच्यो व्यापारो भिद्यते येन धातुप्रत्यययोरर्थभेदः स्यादिति स्वयंव्यक्तमित्याह — **न चेति ।** न चानयोः शब्दयोः करणभेदः । यन्निबन्धनोऽर्थभेदः स्यात् । उभयत्राप्यन्योत्पादकत्वेन शब्दप्रतिपाद्यत्वेन च धात्वर्थस्य करणत्वादित्याह — **करणत्वमिति ।**

यदि च पचत्यादिष्वधिश्रयणादिकं कर्तृव्यापारो भावनेष्यते । तेनास्याः पचत्यधिश्रयत्यादिधातुवाच्यत्वान्न धात्वर्थाद्भेद इत्याह — **किंचेति ।**

१ खपुस्तके 'स एकः' इति पाठः । २ 'निपर्यायविभागः' इति खपुस्तके पाठः

कर्तृव्यापारदृष्टश्च पच्यादौ यदि भावना ।
धात्वर्थान्तररूपः स्यात् सोऽप्यधिश्रयणादिकः ॥

यदि च कर्तृव्यापारो भावना, स च पच्यादिष्व-धिश्रयणादिकः, तं पचिरेवोपादत्ते । अन्यथा सिद्ध्य-तिविक्लिद्यतिभ्यामविशेषः स्यात् ।

अथापि नोपाददीत तथाप्यधिश्रयत्यादिधात्वन्त-रार्थ इति नान्यो धात्वर्थाद्भावनापदार्थः । अथ मतम्-करोतीत्यन्वितावभासस्य प्रत्ययस्य विषयतयाऽनुवृत्ता-त्मा [1]व्यावृत्तावग्रहणगोचरेभ्यो धात्वर्थेभ्योऽन्यो भावनापदार्थ इति, तदसत् । [2]एव हि सामान्यलक्षणा-नुपातिनया [3]धात्वर्थसामान्यरूप एव स्यात् । न पदार्था-न्तरं भावनापदार्थः ।

अथ मतं सत्यं साध्यतया सामान्यं न गोत्वादिव-त्तद्रूपतया । तस्याः प्रतिपुरुषं शीघ्रं करोति मन्दं करो-तीति स्वसामान्यविशेषाभ्यां योगात् । धात्वर्थवर्ति तु [4]करणसामान्यमन्यदेव । उक्तं च—

तदेव विवृणोति—यदीति । कथमुपादत्त इत्यपेक्षिते सत्याह—अन्यथेति ।

अस्यायमर्थः यदि सिद्ध्यतिविक्लिद्यतीतिवत् पचिरपि प्रयोज्यव्यापार-वचनः स्यात्ततस्तावित्र देवदत्तः पचतीति कर्तृभेदेन सामानाधिकरण्य न लभेतेति । अथ शब्दस्वाभाव्यभेदात्कश्चिच्छब्दः पदान्तरसामानाधिकरण्य लभते, कश्चिन्न, किमत्रातिकार्याभिधानेनेत्युच्यते, तथाप्यधिश्रयत्यादि-धात्वन्तरार्थत्वस्य दुर्वारत्वान्नान्यो धात्वर्थाद्भावनेत्याह—अथापीति ।

ननु च पचति=पाकं करोति, गच्छति=गमनं करोतीति सर्वत्रानुस्यूत-

१ खपुस्तके 'व्यावृत्ताऽवग्रहग्रहणेभ्यः' इति पाठः । २ 'एव सामान्य' इति खपुस्तके पाठः । ३ 'धात्वर्थसामान्य एव' इति खपुस्तके पाठः । ४ 'करणरूपं सामान्यम्' इति खपुस्तके पाठः ।

"अन्यदेव हि धात्वर्थसामान्यकरणात्मकम् ।
अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम् ॥"

तदेतदपेशलम् । तथाहि—

न क्रियाकरणाकारे द्वे ज्ञाने अनुयायिनी ।
यतः प्रतीमः सामान्ये द्वे साध्यसमवायिनी ॥

नहि करणं करणमिति क्रियाकारकव्यतिरिक्तेऽर्थे पच्यादिषु प्रत्ययः, यतः क्रियारूपव्यतिरिक्तं करणात्मकं धात्वर्थसामान्यं कल्प्येत ।

शीघ्रमन्दादिश्च धात्वर्थसामान्यस्यैव करोतिवाच्यस्यावान्तरसामान्यभेदः । शोणकर्कादिरिवाश्वत्वस्य।

तथा पाकादिधात्वर्थेभ्यः स्वव्यावृत्तबुद्धिग्राह्येभ्यो व्यतिरिक्तः करोत्यर्थः पचत्यादिशब्देषु प्रतीयत एव । स च तदागमन्यायेन प्रत्ययार्थः । यस्त्वस्याधिश्रयत्यादिधात्वभिधानं ततस्तत्पक्तिमावहति । सर्वत्र प्रत्ययार्थत्वानभ्युपगमात्। न चैवं सति धात्वर्थसामान्याभावः। तस्य करणात्मकत्वादस्य च क्रियात्मकत्वादित्यभिप्रायेण चोदयति—अथ मतमिति ।

तदेतन्निराकर्तुमाह - तदेतदिति । पचत्यादिशब्देषु पाकं करोति गमनं करोतीति क्रियाकारमेवैकं ज्ञानमुत्पद्यते न करणं करणमिति पाकेन गमनेनेत्येवं वा करणाकारम् । अतः पाकादय एव सामान्यविशेषरूपाः क्रियात्मानः । तत्र सामान्यं प्रत्ययवाच्यं, विशेषास्तु धातुवाच्याः । सामान्यविशेषयोश्च भेदोऽस्तीति भेदप्रत्ययः करणविभक्तिश्चोपपन्ना । साध्यसमवायिनी इति करणात्मवादिनो धात्वर्थः साध्यत्वेनाभिमत एव गोदोहनादिवत्सिद्धत्वानभ्युपगमात् । अमुमेव श्लोकार्थं विवृणोति—नहीति ।

यदि क्रियारूपा प्रत्ययवाच्याऽन्या भावना भवना नाभ्युपगम्येत कस्य तर्हि शीघ्रं करोति मन्दं करोतीति शीघ्रमन्दादयो विशेषा इत्यपेक्षिते सत्याह - शीघ्रमन्देति ।

१ 'यागादिसामान्यक' इति खपुस्तके पाठः

उक्तं च—

न हि धात्वर्थकरणः फलभेदप्रभावनः।
धात्वर्थं फलभेदं च व्यापारो दृश्यतेऽन्तरा ॥
वाच्यो लक्षणभेदश्च तत्र धात्वर्थभावयोः।
भावः परिस्पन्द इति यजत्यादावसंभवः ॥

अवश्यं च भावनाधात्वर्थभेदवादिना तयोः स्पष्टो रूपभेदो दर्शयितव्यः। अस्पन्दात्मा धात्वर्थः स्पन्दात्मको भाव इति चेत् एवमस्पन्दमानात्मकर्तृकेषु यजते जानातीत्यर्थेषु तदभावप्रसङ्गः। गच्छत्यादौ च धात्वर्थस्य भावनात्वप्रसङ्गः। चेतनव्यापारस्तु पुरस्तात्प्रत्युक्तः।

यदि च धात्वर्थभावनयोर्भेदः स्यात्ततो घटपटयोरिव रूपभेदोऽपि दर्शयितव्यः। न चासौ दर्शयितुं शक्यत इत्यभिप्रायेणाह वाच्य इति।

ननु शक्यत एव रूपभेदो दर्शयितुं स्पन्दात्मा भावोऽस्पन्दात्मा धात्वर्थ इतीत्याशङ्क्याह—भाव इति।

अस्पन्दमानात्मकर्तृकेषु यजते जानातीत्यादिषु स्पन्दाभावान्निरर्थकमाख्यातं स्यादित्यर्थः। एतदेव विवृणोति—अवश्यं चेति।

यदि च स्पन्दात्मिका भावनेष्येत ततो गमनादिधात्वर्थस्य स्पन्दात्मकत्वाद् गच्छत्यादौ न धात्वर्थव्यतिरिक्ता भावना स्यादित्याह—गच्छत्यादाविति।

नन्वात्मप्रयत्नो भावनेति रूपभेदः शक्यो दर्शयितुम्? न 'आत्मकर्तृकमेवाह' इत्यनेनास्य निराकृतत्वादित्याह—चेतनेति।

---

१ खपुस्तके 'भावधात्वर्थ' पाठः।

कश्चैष परिस्पन्दः? न खल्वयमाश्रयाभिमताद्भेदेन गम्यते।

कथं न गम्यते? यदा सत्यप्याश्रये प्रत्यक्षे कदाचिच्चलतीति प्रत्ययः प्रादुर्भवंस्तद्व्यतिरिक्तमर्थमालम्बते।

नैतत्सारम्। कार्यं विभागसंयोगलक्षणं चलतीति धीः आलम्बताम्।

ततो नान्यो विशेषो लक्ष्यते स्थितात्।

स खलु परिस्पन्दोऽक्षगोचरः पूर्वोत्तरदेशसंयोगविभागफलोऽभ्युपेयते। तथा च तावत् गोचरयत्वेष प्रत्ययः। न खलु पूर्वोत्तरदेशहानोपादाने अप्रतिपद्यमानश्चलतीति बुद्ध्यते। न च स्थितान्निपुणतोऽपि निरूपयद्भिरन्यो व्यापारश्चलतीति लक्ष्यते।

ननु गच्छत्यादिधातुवाच्यसंयोगविभागात्मकगमनादिधात्वर्थेभ्यश्चलतीति प्रत्ययालम्बनरूपोऽन्य एव स्पन्दः, अतः कथं धात्वर्थस्य भावनात्वप्रसङ्ग इत्याशङ्क्याह—कश्चैष इति।

स्पन्द इति विभाग्राभिप्रायमेतत् देवदत्तादेः संयोगविभागलक्षणस्वभावोऽन्यः परिस्पन्दो न गम्यत इत्यर्थः। ननु कदाचित्सत्यप्याश्रये देवदत्तादौ चलतीति प्रत्ययो न जायते। अतस्तदतिरिक्तं परिस्पन्दमालम्बत इति चोदयति—कथमिति।

तत्र परिहारमाह—नैतदिति।

चलतीति प्रत्ययस्य देवदत्तकार्यसंयोगविभागालम्बनत्वान्न संयोगविभागविलक्षणस्वभावोऽन्य स्पन्दो देवदत्तादौ गम्यत इत्यर्थः। कार्यमित्यालम्बनगतकादाचित्कत्वेन प्रत्ययकादाचित्कतां दर्शयति—तत इति।

स्थितात् निश्चलात् चलतो देवदत्तस्य संयोगविभागावेव विशेषो न तदतिरिक्तो भवदभिमतः स्पन्द इत्यर्थः। एतदेव विवृणोति स खल्विति।

१ 'संयोगफल' इति खपुस्तके पाठः। २ 'पूर्वोत्तरदेशापादानापादाने' इति खपुस्तके पाठः।

**ननु चलत्वात्स्थितोऽपि संयोगविभागवान्न चलतीति गम्यते ।**

**अन्यतरकर्मजन्मनोश्च संयोगविभागयोर्द्विष्ठत्वेनोभयक्रियाप्रत्ययप्रसङ्गः ।**

**स्थाणुश्येनयोर्विभागमात्रमेकत्र समुदितयोस्तद्धेतुत्वमिति चेत् ?**

**अन्यतरकर्मजन्मनोरुभयोः प्रसङ्गः । यदा स्थाणुरेकेन श्येनेन संयुज्यते(ऽन्यतश्च वियुज्यते) ।**

**न च कर्मविशेषवन्तौ तदालम्बनम्, पुरःसंयुक्तश्येनविभागपुरःसरेऽपि श्येनान्तरसंयोगेऽभावात् ।**

अचगोचरपूर्वोत्तरदेशसंयोगविभागफलोऽभ्युपेयत इत्यनेन संयोगविभागस्वभावादन्यो नास्तीत्युक्तम् । तत्र चोदयति—**नन्विति** ।

चलित्वा स्थित इति तत्कार्यसंयोगविभागवत्त्वं दर्शयति । तत्र स्थित इति संयोगवत्त्वं चलित्वेति विभागवत्त्वम् । श्येनकर्मजन्मनोश्च संयोगविभागयोर्द्विष्ठत्वेन स्थाणुश्येनस्थितत्वाच्छ्येनवत्स्थाणावपि चलतीति प्रत्ययप्रसङ्ग इत्याह—**अन्यतरेति** ।

ननु समुच्चितयोः संयोगविभागयोरालम्बनत्वम् । न च स्थाणोः श्येनेन युगपत्संयोगविभागौ भवतः, अत कथं प्रत्ययप्रसङ्ग इति चोदयति—**स्थाणाविति** ।

तत्र परिहारमाह—**अन्यतरेति** ।

यदैकश्येनक्रियाजन्यः संयोगो भवत्यपरश्येनक्रियाजन्यो विभागः तस्मिन्नेव काले, तदा संयोगविभागसमुदायसंभवात् स्थाणावपि चलतीति प्रत्ययप्रसङ्ग इत्यर्थः ।

ननु च विभागपूर्वकः संयोग आलम्बनं न संयोगपूर्वको विभागः । त्वया तु संयोगपूर्वक एव विभागो दर्शित इत्याशङ्क्याह—**न चेति** ।

१ कोष्ठान्तर्गतो ग्रन्थ खपुस्तके नास्ति ।

उच्यते—

अच्छिन्नोत्पत्तयो देशविशेषत्यागसंगमाः ।
तद्गोचरपदार्थानामाकाशो देश इष्यते ॥

न खलु संयोगविभागमात्रे चलतीति प्रत्ययः, अपि त्वविच्छिन्नोत्पादसंयोगविभागप्रबन्धः स्थिते च तदभावः । न च स्थाणौ देशविशेषविषयौ संयोगविभागौ [1]संयोगिमात्रस्यादेशत्वात् ।

न हि श्येनौ स्थाणोर्देशाविति प्रतियन्ति लौकिकाः। आकाश एव तु सकलदेशपदार्थानां देश इति प्रतीमः। अतस्तत्प्रदेशसंयोगविभागावेव तदालम्बनमिति स्थाणौ न प्रसङ्गः ।

अकिञ्चित्करत्वेनोत्क्रमेणादान संयुक्तश्येनविभागपुरःसरेऽपि संयोगे चलतीति प्रत्ययाभावादित्यर्थः ।

एवं चोदिते सत्युत्तरमाह —उच्यते इति ।

तत्राच्छिन्नोत्पत्तय इत्यनेन यः स्थिते प्रत्ययप्रसङ्गो दर्शितः स परिहृतः देशविशेषग्रहणेन च स्थाणौ । एतदुक्तं भवति । अविरलदेशविशेषविभागसंयोगाश्चलतीतिप्रत्ययस्यालम्बनम् । न च स्थिते पृथिव्यादावविरलत्वं संयोगादेः सम्भवति । नापि स्थाणौ देशविशेषानिबन्धनत्वं श्येनस्यादेशत्वात् । आकाश एव हि सर्वपदार्थानां देश इष्यते । यथोक्तम् । न हि तिष्ठन्ति तत्र धना इति । अमुमेव श्लोकार्थं विवृणोति—न खल्विति ।

कथं तर्हि पृथिव्यादौ देशव्यवहारः यद्याकाश एव सकलपदार्थानां देशः । उच्यते । साक्षात्तावदाधारलक्षणं देशत्वमाकाशस्यैव, मूर्ते पृथिव्यादौ मूर्तस्य देवदत्तादेः स्थित्यनुपपत्तेः । यत्तु पृथिव्यादीनां देशत्वं तत्तथास्थितानां पतनप्रतिबन्धकत्वेनाधारभावावगमात् । तेन द्विविधमेव देशत्वम् आश्रयत्वमन्योन्यावस्थितस्याविदारकत्वं च । तत्राश्रयत्वलक्षणमाकाशस्य । अन्योन्यावस्थितिप्रतिकारकत्वलक्षणं पृथिव्यादेः ।

---

१ 'संयोगमात्रस्यादेशत्वात्' इति पुस्तके पाठः ।

ननु व्योम्नोऽप्रत्यक्षत्वाद्वायुवनस्पतिसंयोग[1] ( विभाग ) वत्तत्संयोगविभागानां प्रत्यक्षावृत्तित्वेनानैन्द्रियकत्वादिन्द्रियजन्मनः प्रत्ययस्य विषयता न युक्ता ।

ननु युक्ता । अन्यथा—

कथं गम्येत वयसो नियताऽपदेशता ।

चलतोऽक्षान्निवृत्ताश्चेद्विहायोदेशसंगमाः ॥

अप्रत्यक्षत्वे हि नभोविभागसंयोगादीनां कथं पतति पतत्रिणि देशभेदाधिकरणज्ञानम् ।

ननु संयोगविभागालम्बनत्वे कथं वयसि प्रत्यक्षाप्रत्यक्षवृत्तिव्योमसंयोगविभागनिबन्धनोऽक्षजश्चलतीति प्रत्ययः, कथ च वनस्पताविति चोदयति—नन्विति ।

वायुवनस्पतिसंयोगविभागानामिति क्वचित्पाठः क्वचिच्च वायुवनस्पतिसंयोगवदिति ; स साधुरव । केवलं दार्ष्टान्तिकानुपादानं दोष इति । प्रकृते त्वेतत्परिहारार्थं परिहारान्तरोपपत्तेश्च पक्षिव्योमसयोगो द्रष्टव्यः । प्रत्यक्षाप्रत्यक्षवृत्तित्वादाकाशदेशसयोगस्य पक्षिव्योमसयोगस्य चेत्ययः । तत्र परिहारान्तरमाह—नन्विति ।

आकाशे पक्षिणि गच्छतीहाय वर्तते नेहेति वा चाक्षुषः प्रत्ययो भवति । स कथमित्र व्योमसयोगाप्रत्यक्षतायामवकल्पेत । स हि सयोगिप्रत्यक्षताया भवति । तथाच व्योमापि प्रत्यक्षम् । अस्ति च विस्तारितदृष्टेः पृथिव्याद्यनात्मकनीलरूपपदार्थप्रत्ययः तदालम्बनमाकाशम् । अन्यथा निरालम्बनतैव स्यात् । न च पृथिव्याद्यभाव एवालम्बनः भावाकारप्रत्ययोत्पत्तेरैन्द्रियकत्वाच्च तस्य, न चैन्द्रियकोऽभावप्रत्ययः । यदि चाप्रतिभासमानोऽप्यभावोऽस्यालम्बनमित्युच्यते । ततो गोबुद्धिरश्वाद्यालम्बनेत्यपि प्राप्नोति । किंस्वभावं तदाकाशमिति ? अमूर्तमपि सर्वगतमात्मादिवत्स्वतन्त्रमिति ।

सयोगविभागप्रत्यक्षतामेव दर्शयति— अप्रत्यक्षत्वे हीति ।

---

१ कंसान्तर्गतो ग्रन्थः ख पुस्तके नास्ति ।

**क्रियया कारणेन कार्यानुमानादिति चेत् ?**

**न, नियतदेशाधारप्रतीतेः । इह प्राप्तो नेहेति नियतप्रत्ययो न देशविशेषसंयोगाप्रत्यक्षतायामवकल्पते ।**

**वियद्वितताऽऽलोकनिचयावयवनिबन्धनत्वादुपपन्नमिति चेत् ?**

**स एव तद्व्योमाकाशदेश इति तद्वर्तिसंयोगविभागौ प्रत्यक्षौ ।**

नन्वप्रत्यक्षत्वेऽपि नभोदेशस्येह प्राप्त इति देशभेदाधिकरणमुपपद्यत एव ज्ञानम् । कथं प्रत्यक्षग्राह्यक्रियात्मकारणेन संयोगविभागकार्यविषयमेतदनुमानं भविष्यतीति नास्ति कश्चिद्दोष इति चोदयति—**क्रिययेति** ।

तत्र परिहारमाह—**न नियतेति** ।

क्रियाकारणकसंयोगविभागलक्षणकार्यानुमाने य कश्चन देशं प्राप्तः पक्षीत्यनुमानं स्यान्नानुमितिः । न च यद्देशे क्रिया तद्देश एव संयोगोऽनुमीयत इति वक्तव्यम् । कारकदेशत्वात् क्रियायाः संयोगस्य च द्विष्ठत्वात् । नच नियतदेशवर्तिना क्रिया नियतदेशमेव संयोगमनुमापयतीति वक्तुं शक्यम् । आकाशस्याप्रत्यक्षत्वे नियतदेशवृत्तिकारणाप्रतीतेः । न चायं नियमो यद्देशवृत्ति कारणं तद्देशवृत्त्येव कार्यमुत्पद्यत इति । पादाभ्यङ्गचक्षुरमलत्वयोर्भिन्नदेशयोरपि कारणभावदर्शनात् । तस्मात् प्रत्यक्ष एवाकाशसंयोग इति सिद्धम् ।

ननु वियद्वितनालोकावयवसंयोगविभागालम्बनमेवैतदिह प्राप्तो नेहेति संयोगविभागप्रत्यक्षत्वेऽप्यस्तु किमाकाशसंयोगविभागप्रत्यक्षत्वेनेति चोदयति—**वियदिति** ।

तत्र परिहारमाह—**स एवेति** ।

**अपि च-प्रत्यक्षाप्रत्यक्षवृत्त्योरपि संयोगविभागयोः सिद्धयोः प्रत्यक्षत्वकल्पना युक्ता न त्वसिद्धस्य कर्मणः। ताभ्यामेव तर्हि संयोगविभागाभ्यां क्रियामनुमिमीमहे, कादाचित्कयोरहेतुत्वानुपपत्तेः। कादाचित्कत्वादेव चाश्रयमात्रहेतुत्वायोगात् हेत्वन्तरापेक्षणात्।**

**नैतत्सारम्। यतः**

**नित्यत्वे सर्वदा जन्म स्यात्संयोगविभागयोः।**
**अनित्यत्वेऽस्य यो हेतुस्तयोरेवास्तु तेन किम्॥**

**तद्धि कर्म संयोगविभागाभ्यां नित्यमनित्यं वाऽनुमीयेत। नित्यत्वे हेतुसन्निधानाद्धेत्वन्तरानपेक्षत्वाच्च सदा संयोगविभागोत्पादप्रसङ्गः। अनित्यत्वे तु तस्यापि हेतुसत्त्वात्तद्धेत्वभिमतादेव तत्सिद्धिरिति किमन्तर्गडु-[1]ना कर्मणा।**

वायुवनस्पतिपक्षिणामालोकावयवैरेव सह संयोगविभागौ चलतीति प्रत्यक्षप्रत्ययालम्बनौ भविष्यतः किमस्माकं तद्व्यतिरिक्तक्रियाग्रहेणेत्यर्थः। अप्रत्यक्षयोर्मवृत्त्योरपि सर्वजनप्रसिद्धयोः क्लृप्तकल्प्यन्यायेन संयोगविभागयोरेव प्रत्यक्षत्वं कल्पयितुमुचितं नान्यस्याप्रसिद्धस्य कर्मण इत्याह—**अपि चेति।**

ननु यद्यपि प्रत्यक्षेण परिस्पन्दो न गम्यते तथापि संयोगविभागरूपात्कार्यात्कारणीभूतः परिस्पन्दोऽनुमास्यत इति चोदयति—**ताभ्यामेवेति।**

न संयोगविभागयोर्द्रव्यसत्तादिः कारणत्वं समवति तद्धेतुत्वे यावद्द्रव्यसत्तं संयोगविभागौ स्यातां न कदाचिदित्याह—**कादाचित्कयोरिति।**

एवं चोदिते प्रत्युत्तरमाह—**नैतत्सारमिति।**

यदि परिस्पन्दः सर्वदाऽस्ति किमिति सर्वदा संयोगविभागौ न स्तः। अथ सोऽपि संयोगविभागवदेव कादाचित्कस्तस्यापि हेतुरभ्युपगन्तव्यः, स संयोगविभागानामेव भविष्यति किं धर्म्यन्तरात्मकपरिस्पन्दग्रहणेनेत्यर्थः। एतदेव विवृणोति—**तद्धीति।**

---

[1] 'अन्तर्गतगडुना' इति खपुस्तके पाठः।

**यस्तु मन्यते नित्यत्वादन्तरङ्गत्वाच्च कर्मैव कारणं संयोगविभागयोर्न प्रयत्नादिर्बहिरङ्गत्वाद्व्यभिचारित्वाच्च ।**

**तथाहि । कर्मैकार्थसमवायिनः संयोगविभागसंस्काराः कर्मणि च सति नियोगतस्तत्सद्भावः तत्कार्यानुमितस्य हेतोस्तदभावे सत्ताप्रमाणाभावात् ।**

**प्रयत्नस्त्वात्मस्थः, सत्यपि च प्रयत्ने बहुषु संयुक्तेषु किञ्चिदेव प्रयत्नाद्देशान्तरं प्राप्नोति ।**

**स वक्तव्य —**

**प्रसिद्धस्यान्तरङ्गत्वान्नित्यत्वाद्धेतुता भवेत् ।**

ननु चाव्यभिचारित्वात्समानाश्रयत्वेन चान्तरङ्गत्वात्परिस्पन्दस्यैव कृतकस्यापि संयोगविभागौ प्रति कारणत्वं युक्तम्, न व्यभिचारिणो बहिरङ्गस्य परिस्पन्दहेतोः प्रयत्नस्येति चोदयति **यस्त्विति ।**

तदेव दर्शयति – तथा हीति ।

यत्रैव परिस्पन्दस्तत्रैव पाण्यादौ संयोगविभागौ वेगाख्यश्च संस्कारः प्रवर्तत इत्येकाश्रयत्वम् । संस्कारग्रहणं दृष्टान्तार्थम् । संस्कारवत्संयोगविभागयोः परिस्पन्दकार्यसमवाय इत्यर्थः । कर्मणि च सतीत्यव्यभिचारित्वं परिस्पन्दे दर्शयति । यदिह परिस्पन्देऽस्ति संयोगविभागौ च न जायेते ततो व्यभिचारः स्यात्, न त्वेतदस्ति । संयोगविभागकार्यानुमेयस्य संयोगविभागाभावे सत्त्यासिद्धेः कुतो व्यभिचारः ।

इदानीं प्रयत्नस्य बहिरङ्गत्वं व्यभिचारित्वं च दर्शयति— **प्रयत्न इति ।**

बहुष्वपि हस्तादिष्वात्मसंयुक्तेषु प्रयत्नात्किञ्चिदेवाङ्गं देशान्तरं प्राप्नुवदुपलभ्यते । तत्र यदि प्रयत्नहेतू संयोगविभागौ स्यातां ततः किमित्यात्मप्रयत्ने उत्पन्ने संयुक्तसमवायविशेषात्सर्वेऽवयवाः संयोगविभागौ प्रतिपद्यन्ते । कर्मजन्यत्वे तु नियतावयवात्कर्मणो नियता एवावयवाः संयोगविभागौ प्रतिपद्यन्त इति ।

एवं चोदिते सत्युत्तरमाह—**स इति ।**

---

१ 'कार्यानुमितस्य' इति खपुस्तके पाठः ।

**अकारणत्वमन्यस्य यदि कर्म ततः कथम् ॥**

**बहुसमवधाने हि नित्यत्वान्तरङ्गत्वाभ्यां प्रसिद्धसद्भावं वस्तु हेतुरिति व्यवस्थाप्यते न त्वप्रसिद्धसद्भावस्य कल्पना ।**

**तद्विपरीतस्य हेतुत्वमनुपपन्नमिति । तादृशमप्रसिद्धसद्भावमपि परिकल्प्यत इति यदि मतं हन्त तर्हि कर्मणोऽपि तदकारणमापतति । अथ व्यधिकरणमपि सम्बन्धात् (केनचित्[1]) कुतश्चित् च प्रतिबन्धाद्दृष्टव्यभिचारमपि तत्कर्मणः कारणं संयोगविभागाभ्यां किमपराद्धं येन दृष्टं कारणं परित्यज्यादृष्टं मृग्यते ?**

**प्रायेण च कर्महेतवः संयोगविभागैकाधिकरणा इति यत्किञ्चिदेतत् ।**

अनेककारणोपप्लवे विद्यमानमन्तरङ्गत्वाव्यभिचारित्वाभ्यां कर्म हेतुत्वेन व्यवस्थाप्यते । मैवं, कर्मणोऽप्यविद्यमानत्वे कुतस्तद्धेतुको हेतुभावः स्यात् । यदि च व्यभिचारित्वाद्बहिरङ्गत्वाच्च प्रयत्नः संयोगविभागयोरकारणमुच्यते ततस्ताभ्यामेव हेतुभ्यां कर्मणोऽप्यकारणमेव प्रयत्नः स्यादित्याह—**अकारणत्वमिति ।**

तत्र तावत्पूर्वार्द्धं विवृणोति—**बहुसमवधाने इति ।**

इदानीमुत्तरार्धं विवृणोति—**तद्विपरीतस्येति ।**

अन्तरङ्गाव्यभिचारिविपरीतस्य व्यभिचारिणो बहिरङ्गस्य च प्रयत्नादेर्हेतुत्वमयुक्तमिति कृत्वान्तरङ्गमव्यभिचारि च कर्म कारणं संयोगविभागयोरप्रसिद्धमपि कल्पितमित्युच्यते । तदयुक्तम् । संयोगविभागवत्कर्मण्यपि प्रयत्नस्य बहिरङ्गत्वव्यभिचारित्वाविशेषादकारणत्वापत्तेः । अथात्माधिकरणमपि प्रयत्नादिपारम्पर्य्यसंबन्धान्नियतावयवात्मैकविशेषितं नियता-

[1] केनचित्' पदं खपुस्तके नोपलभ्यते । [2] 'यत' इति खपुस्तके ।

**हेतुसत्ता च कार्येण ततः प्रागनुमीयते।**
**वर्तमानावभासः स्यान्न क्रियाधिगमेस्ततः॥**

**कार्योपजननप्रत्यनन्तरकालं (हेतुसत्त्वं तदुपयोगि न कार्यकालम्) तस्य तदा सिद्धत्वात्। (अतः कार्येणे-ममनुमिमानस्तत्कालमेवानुमिमीते न वर्तमानकालम्)। तथा च फललिङ्गात्मजन्मा ततः प्राक्कालक्रियागोचरः प्रत्ययो न वर्तमानावग्रहः स्यात्।**

वयव स्पन्दमारभत इत्युच्यते, ततः संयोगविभागयोरप्येव प्रयत्नः कारण स्यादित्यविशेषः।

अपि च गुरुत्वादेः पतनादिकर्महेतोः संयोगविभागेकाधिकरण्यमस्तीति न बहिरङ्गत्वं वक्तुं शक्यत इत्याह—**प्रायेणेति।**

इतश्च संयोगविभागाभ्यां न कर्मानुमीयत इत्याह- **हेतुसत्तेति।**

संयोगविभागाभ्यां कार्यभूताभ्यां कारणभूतः परिस्पन्दोऽनुमीयमानोऽति-क्रान्तोऽनुमीयते न वर्त्तमानः। न हि संयोगविभागसद्भावकाले वर्तमानः परिस्पन्दः संयोगविभागयोः कारणम्। उभयोरविशेषान्न समानकालयोः कार्यकारणभाव इष्यते, किं तर्हि पौर्वापर्यव्यवस्थितयोः। तेन यद्यपि संयोगविभागकाले यावत्परिस्पन्दोऽधिगम्यते तथाप्यनन्तरपूर्वकालया सत्तया कारणं न तत्कालया। अतः 'चलति' इति वर्तमानपरिस्पन्दावभासो न युक्तः स्यात्। कथं तर्हि कुर्वत्कारकमुच्यते? नानेन [कार्य]कारणयोः समा-नकालत्वमुच्यते, किं तर्हि भविष्यत्येव कार्ये केनचिद्रूपेण तैरभीन्य प्रतीयत इति कुर्वदित्युच्यते। कथं तर्हि ज्ञानसंवेदनयोः कार्यकारणभावः? न ज्ञानकार्यं विषयसंवेदनमिष्यते, किं तर्हीन्द्रियादेर्ज्ञानमुत्पद्यमानं विषयसंवेद-नात्मकमेवोत्पद्यते, यथा तैलवर्तिकादेः प्रदीपः प्रभाधर्मकः। यस्तु कार्य-कारणव्यपदेशः स कथञ्चिदौपचारिको द्रष्टव्यः। कथं तर्हि प्रमितिमकुर्वतः करणत्वात्मकं प्रमाणत्वम्? नैव ज्ञानं प्रमाणम्, इन्द्रियाद्येव तु प्रमाणं,

१ खपुस्तके 'क्रियावगमः' इति पाठः।

२ कसान्ततो ग्रन्थः खपुस्तके नास्ति। ३ 'वर्तमानाकारग्रहः' इति खपुस्तके पाठः।

**अपि च—**

**संयोगान्तं वर्तमानं तन्न उन्नीयते कथम् ।**
**विभागतो मीयमानं स्याच्चाप्येतदापतेत् ॥**

ज्ञानं फलम् । योऽपि तत्र प्रमाणव्यपदेशः स कथञ्चित्संविदस्तदधीनत्वा-दौपचारिको द्रष्टव्य । कथं तर्हि संवेदनेन ज्ञानानुमानम् ? न कारणतया ज्ञानमनुमीयते किं तर्हि धर्मितया । न चेन्द्रियस्यार्थस्य वा धर्मित्वं संभवति सत्यपि तस्मिंस्तददर्शनात् । तेन नूनं किञ्चिदर्थेन्द्रियादिविलक्षणमिन्द्रि-यादेरुत्पन्नं संवेदनधर्मकमित्यवगम्यते । न चेन्द्रियादिभ्यो विषयसंवेदनं ज्ञाननिरपेक्षमुत्पत्तुमर्हति । आत्मनो हि घटः प्रतिभासते. स चेत्पूर्वावस्थातो न विकृतः कथमिव प्रतिभासते । न च विषयप्रतिभास एव तस्य विकारः घटादिधर्मत्वादापरोक्ष्यस्य । अपरोक्षधर्मो ह्यापरोक्ष्यम् । घटोऽयमिति च प्रतिपत्तौ घटोऽपरोक्षो नात्मा । ज्ञानधर्मत्वं च विषयसंवेदनात्मकत्वेन तदुत्पत्ते । ज्ञानधर्म एवार्थे प्रतिफलित इत्यर्थधर्मत्वं न तादात्म्येन रूपादेरिव धर्मत्वम् । न चात्मारूढमतद्विषयसंवेदनमर्थे प्रतिफलितमिति वा-च्यं, विरोधात् । न हि विषयमारोहत्यात्मा, ज्ञानं तु तदारूढमेव । तेनात्मन-स्तदुपभोग्यमन्याश्रितमपि धर्माधर्मोपात्तैरिन्द्रियादिभिर्विषयसंवेदनात्मकं ज्ञान-मुत्पद्यते । यद्वा, इन्द्रियसंनिकर्षादात्मनस्तावत् ज्ञानरूप एव विकार उत्प-द्यते । स चोत्पन्नोऽर्थमवभासयति । तदवभासनं कुर्वन् पश्चाद् ज्ञानरूपो भवति । एवं पौर्वापर्ये सति कार्यकारणभावः प्रमाणत्वं चोपपद्यते । यत्तु ज्ञानं प्रमाणमित्युच्यते तत् तस्य पश्चात् ज्ञानत्वमस्तीति द्रष्टव्यम् । न ह्यन्यथा कार्यकारणभावः स्यात् । उक्तं च—

'तद्भावभाविमात्रं च हैतुकैर्नैव वार्य्यते ।
पौर्वापर्य्यविनिर्मुक्तं कार्यकारणलक्षणम् ॥' इति ।

अमुमेव श्लोकं विवृणोति—**कार्योपजननेति ।**

भवतु वा तत्कालीनयैव सत्तया परिस्पन्दः कारणं तथापि न वर्तमाना-वग्रहः स्यादित्याह—**अपि चेति ।**

विभागं संयोगं चोत्पाद्य कर्म विनश्यतीति वैशेषिकाः । तेन विभागोपक्रमं संयोगान्तं कर्म विभागपूर्वकसंयोगोत्तरकालं विनष्टमेवानुमीयते न वर्तमा-

**संयोगान्तं कर्म संयोगोत्पादज्ञानस्योत्तरकाल-मनुमीयमानं न वर्तमानं, संयोगविभागौ तु वर्तमानौ। ज्ञानरूपानुरूपश्च विषयो न तु तद्विपरीतः। तस्मा-त्तयोरेव चलतीति प्रत्ययविषयता न तु कर्मणः।**

**अथ विभागानुमेयत्वात्तमुपजनय्याऽऽसंयोगोत्पादं व्यवस्थानाद्वर्तमानमनुमीयत इति, तदसत् स्थाणा-वपि प्रसङ्गात्। विभागस्य तुल्यत्वात्।**

**तस्माद् गुणविशेष एव धातूपादानः क्रिया न तु तद्व्यतिरिच्यमानात्मा क्रियापदार्थः, यः प्रत्ययस्य धातो-र्वाऽभिधेयः स्यात्।**

ननु। चलतीति च वर्तमानप्रतिभासः, तस्मान्नानुमीयमानक्रियालम्बनमेतत् ज्ञानम् अपि तु वर्तमानसंयोगालम्बनं प्रत्यक्षमेवेति न्याय्यम्।

ननु च विभागादेव क्रियामनुमास्यामहे, तथा च वर्तमानप्रतिभासो न विरुध्यते संयोगान्तत्वेन तदा तस्य वर्तमानत्वादित्याशङ्कयाह— **विभागत इति।**

यदि विभागानुमेयं कर्मेत्युच्यते तथा सति स्थिते स्थाणावपि कर्मानुमान-प्रसङ्गः। स्थाणुश्येनविभागस्य स्थाणावपि विद्यमानत्वात्। अथ देशविभागो लिङ्गं, न च स्थाणोर्देशभूतेन श्येनेन विभागः, अतः कथं तत्र कर्मानुमानम्, इत्युच्यते तथा सति चलित्वा स्थिते देवदत्तादौ पृथिव्यादिदेशविभागस्य विद्य-मानत्वात्कर्मानुमानप्रसङ्गः। न चाविरतो विभागो लिङ्गमिति वक्तव्यं विभागान्तरापेक्षाया कर्मविनाशाद्वर्तमानावभासाभावप्रसङ्गादित्यर्थः।

तत्र तावत्पूर्वार्द्धं विवृणोति —**संयोगान्तमिति।**

उत्तरार्द्धं विवृणोति—**अथेति।**

यथा चलतीत्यक्षजः प्रत्ययः संयोगविभागालम्बनस्तथा पचन्त्यादि शब्दजनिता अपि प्रत्ययाः संयोगविभागरूपगुणविशेषालम्बना न तद्द्रव्या-तिरिक्तक्रियाग्राहिण इत्याह—**तस्मादिति।**

---

१ 'संयोगाद् व्यवस्थानात्' इति खपुस्तके पाठः। २ 'तद्व्यतिरिच्यमानः' इति खपुस्तके पाठः।

**यदप्यनुमानं यत्सर्वेषु साधनेषु संनिहितेषु सत्सु कदाचित्पचतीति प्रत्ययो भवतीति, तन्न,**

**सिद्धेर्गुणविशेषेण पचतीत्यपि संविदः[1] ।**
**क्रियापदार्थस्यान्यस्य नानुमानं प्रकल्प्यते ॥**

**यः खलु तण्डुलावयवेषु विभागलक्षणः प्रशिथि-लावयवसंयोगलक्षणो[2] वा गुणभेदस्तस्य संनिहितेष्वपि साधनेषु कदाचिद्भावात्तन्निबन्धनः पचतीत्यपि प्रत्यय इति तत्र क्रियापदार्थानुमानं युक्तम् । तत एव तर्हि गुणविशेषात् कादाचित्कात्तदस्तु । अन्यथा साधन-सन्निधिमात्र एवैष स्यात् ।**

**न, कर्मणोऽपि तथा प्रसङ्गात् । कर्मान्तरानुमानं**

यत्पुनः कारकव्यतिरिक्तक्रियाग्राहि कैश्चिदनुमानमुपन्यस्तम्—उखा-काष्ठतण्डुलदेवदत्तादिकारकग्रामसन्निधाने कदाचित् पचतीति प्रत्ययो भवति कदाचिन्न भवति । स यदि कारककारणक एव स्यात् तदा सर्वदा प्रत्ययः प्राप्नोति, नचैवम् । अतोऽन्यहेतुक इति निश्चीयते । तेन कार्यभूतात् पचतीतिप्रत्ययात्कारणभूता क्रियाऽनुमीयत इति, तद्दूषणायोपन्यस्यति—**यदपीति ।**

तत्र दूषणमाह—**सिद्धेरिति ।**

तण्डुलावयवविभागशिथिलसंयोगनिबन्धनत्वात्पचतीति प्रत्ययस्य तस्य कादाचित्कत्वान्न कदाचिद्भवतः प्रत्ययात्तद्व्यतिरिक्तक्रियानुमानं शक्य-मित्यर्थः । अमुमेव श्लोकं विवृणोति—**यः खल्विति ।**

ननु संयोगविभागयोः कादाचित्कत्वात्तत्कारणभूतां क्रियामनुमा-स्यामहे । न च काष्ठादिकारकाणामेव कारणत्वं सम्भवति । सत्स्वपि तेषु संयोगविभागयोर्यथेष्टानुपलम्भादिति चोदयति—**तत एवेति ।**

तत्र परिहारमाह—**न कर्मण इति ।**

---

१ 'पचतीत्यभिसंविदः' इति खपुस्तके पाठः । २ 'प्रशिथिलसंयोग' इति कपुस्तके ।

**चानवस्थापातात् । अग्निसंयोगस्य क्रमेण भावात् प्रकृष्यमाणत्वाच्च । तद्धेतोर्न तस्य साधनसन्निधिमात्र एव भावः ।**

**तस्यैव तर्हि संयोगस्य कारणं कर्मेति चेत्? न, प्रयत्नादेरेव कर्महेतोस्तद्धेतुत्वात् । तदित्थं यागादिव्यतिरिक्तभावनाभावात् ।**

**यागेन भावयेत् स्वर्गमित्यर्थः परिकल्पितः ।**
**स्वर्गकामस्य यागे तु नियोगः संप्रतीयते ॥**

यथैव संयोगविभागौ साधनजन्यत्वे सर्वदा स्याताम् तथा कर्मापि सर्वदा स्यात् । अथ कादाचित्कत्वानुग्रहार्थं कर्मान्तरजन्यं कर्मेत्युच्यते, तथा सत्यनवस्थैव स्यादित्याह—**कर्मेति** ।

ननु परपक्षसाम्यापादनमात्रं स्वपक्षासाधनमत आह—**अग्निसंयोगेति**।

यद्यपि संयोगविभागशैथिल्ये कादाचित्के तथापि न ताभ्यां क्रियानुमानं संभवति, अग्निसंयोगहेतुकत्वात्तयोः । तन्दुलावयवानामग्निसंयोगे सति संयोगविभागशैथिल्ये भवतः, स चाग्निसंयोगस्तद्धेतुः । तस्मिन्सति तन्दुलावयवानामग्निसंयोगे सति प्रकर्षदर्शनादिति । नन्वग्निसंयोगस्यैव कर्म कारणं भविष्यतीति चोदयति- **तस्यैवेति** ।

तत्र परिहारमाह—**न प्रयत्नादेरेवेति** ।

यस्तु कर्महेतुः प्रयत्नादिर्भवतोऽभिप्रेतः स एवास्माकमग्निसंयोगहेतुर्भविष्यति किमन्येन क्रियाकल्पनेनेत्यर्थः । तदेवमुक्तेन प्रकारेण संयोगविभागातिरिक्तपरिस्पन्दाभावात्प्रयत्नस्य च यागादिधात्वर्थव्यतिरिक्तस्याभावाद् यागादिधात्वर्थव्यतिरिक्तभावनाऽभावे यागेन भावयेत् स्वर्गमिति काल्पनिक एव वाक्यार्थो न शाब्द इत्याह —**तदित्थमिति** ।

कथं पुनः काल्पनिको वाक्यार्थ इत्यपेक्षिते सत्याह—**स्वर्गकामस्येति**।

---

१ 'अग्निसंयोगस्य तु' इति खपुस्तके पाठः ।

सत्यां[1] हि भावनायां यागस्य करणत्वं कर्मापेक्षायां[2] पुरुषविशेषणस्यापि स्वर्गस्येष्टस्य सामर्थ्यात्कर्मत्वम-वधार्यते। तदभावे तु मन्दाग्निविप्रलब्धुमेष परिकल्पन-निमित्तो वाक्यार्थो यागेन भावयेत्स्वर्गम्।

पुरुषविशेषस्य नियोगो यागे गम्यते। तस्मिंश्चानु-ष्ठिते स्वर्गादिफलं स्वतोऽन्यतो वा कुतश्चिद्भविष्यति नैवं[3] वा। न स्वयमर्थः शक्योऽभ्युपगन्तुम्।

ननु पुरुषविशेषणमेव न संभवति। अयो-गान्ययोगात्यन्तायोगानामन्यतमस्यापि व्यवच्छेदा-संभवात्। जात्या च तस्याभावात्।

तत्र पूर्वार्द्धं तावद्विवृणोति—सत्यां हीति।

इदानीमुत्तरार्द्धं विवृणोति —पुरुषेति।

स्वर्गादिफल प्रति यागादेः करणत्व शब्देनाबोधि। तेन यागादेः स्वर्गा-दिफल भवति। क्रियागर्भो हि तयोः कर्मकरणभावः। सा चेन्नास्ति कथमिव तयोः कर्मकरणभावः स्यात्? तेन यागादावनुष्ठिते स्वत एव स्वर्गो भविष्यति। कादाचित्कत्वादन्यतो वा कुतश्चिन्नैव वा भविष्यति। यागादिवदन्यस्यापि तत्साधनत्वेनाप्रतीयमानत्वात्। स्वाभाविकत्वे च सर्वदोत्पत्तिप्रसङ्गात्।

ननु स्वर्गस्य पुरुष प्रति विशेषणत्वं न युक्तम्। त्रिविधं हि विशेषणं भवति। किञ्चिदयोगव्यवच्छेदेन यथा पीनो देवदत्त इति। न त्वत्रान्ययोग-व्यवच्छेदः सभवति, अन्यस्यापि यज्ञदत्तादेः पीनत्वात्। नाप्यत्यन्तायो-गव्यवच्छेदः। देवदत्तस्य कदाचिदन्नक्षयादिना कार्श्योपपत्तेः। अन्ययोग-व्यवच्छेदेन यथा पार्थो धनुर्द्धर इति। अन्यत्र तदभावस्य विवक्षितत्वात्। अत्यन्तायोगव्यवच्छेदेन यथा गन्धवती पृथ्वी इति। अन्यत्र गन्धासम्भवे-नात्यन्ताभावनिषेधार्थत्वात्। न चात्रैकप्रकारमपि विशेषणत्व सभवति। न तावदयोगव्यवच्छेदः। अनुष्ठानात्प्रागुत्तरकालं वा यागस्यादृश्यमानत्वात्।

१ ख पुस्तके 'हि' शब्दो नास्ति। २ 'कर्मापेक्षणीयस्वात् यस्यापेक्षायाम्' इति ख पुस्तके पाठः। ३ 'नव वायमर्थः' इत्येव खपुस्तके पाठः।

**साध्यत्वमपि तर्ह्यनुपपन्नं स्वर्गस्य तथाऽनिर्देशात् विशेषणस्यैवार्थाद्भावनासम्बन्धाभ्युपगमात् ।**

**वर्तमानेच्छाविशेषणत्वमितरस्याप्यविरुद्धम् ।**

**न फलनिमित्तयोरन्यतरापत्तेः । निमित्तत्वे तु यावज्जीवश्रुत्युपसंहारे तदानर्थक्यम् । अनुपसंहारे त्वेतत् स्यात् ।**

नाप्यन्ययोगव्यवच्छेदोऽन्यस्यापि कदाचिद्योगोपपत्तेः । नाप्यत्यन्तायोगव्यवच्छेदः । स्वर्गकामस्य यागाद्यननुतिष्ठतः कदाचित्कार्यस्वर्गयोगाभावात् ; [इति] न पुरुषविशेषः संभवतीति चोदयति— **ननु पुरुषेति ।**

न च जात्यैव ब्राह्मणवत्स्वर्गकामो येन पुरुषविशेषः स्यादित्याह— **जात्येति ।**

एव चोदिते सति पूर्वपक्षवाद्याह —**साध्यत्वमिति ।**

यदि स्वर्गस्य विशेषणत्व नाभ्युपगम्यते तथापि तर्हि साध्यः स्वर्गो न स्यात्, न हि त साध्य द्वितीयानिर्दिष्ट पश्यामः, किं तर्हि ? पुरुषः स्यादित्यविशेषणस्यैव सतो भाव्यापेक्षाया पुरुषार्थस्य स्वर्गादेरर्थात् साध्यत्वमभ्युपगम्यते । ननु न पुरुषविशेषणं स्वर्गादि साध्यमभ्युपगच्छाम किं तर्हि इच्छाविशेषणम् । तथाहि - स्वर्गकामादिपदात्कामपदोपात्तेच्छाविशेषणत्वेन स्वर्गादि गम्यते । काम्यस्य च काम प्रत्यययोगव्यवच्छेदेन विशेषणत्वमस्तीत्याशङ्क्याह— **वर्तमानेति ।**

मीमासकवदितरस्याप्यविरुद्धमेवेच्छाविशेषणत्वं स्वर्गादेर्भविष्यति । इच्छाविशेषणस्यैव च पारम्पर्येण कथञ्चित्पुरुषविशेषणत्वोपपत्तिः । ननु चासाध्ये स्वर्गे कथ तद्विषयिणी इच्छा भवेत्तेनेच्छाविशेषणत्वमपि तत्रानुपपन्नम् । नैष दोषः । साध्येऽसाध्ये वा स्वर्गे वर्तते तावदिच्छा । न च नियोगतः साध्यमेवेच्छति सुरगणिकादौ राज्ये वाऽसमर्थस्येच्छादर्शनात् । तदेतद्वर्तमानग्रहणेनाह । एवमुक्ते सति मीमासकाश्चोदयन्ति—**न फलेति ।**

१ 'वार्थाभावना' इति खपुस्तके पाठ ।

**स्यात्तावदेष नित्येषु परिहारो नानित्येषु।**

**अपि चानर्थक्यं[1] स्यादित्यनर्थो नावगन्तुं शक्यत इत्युक्तम्।**

यदि स्वर्गस्य साध्यत्वं नाभ्युपगम्यते ततः फलनिमित्तयोर्मध्येऽन्यतरस्य निमित्तस्यापत्तेर्निमित्तप्रतिपादकं स्वर्गकामादिपदं स्यात्। स्वर्गेच्छा चेद्भवति यजेत जुहुयाच्चेति। निमित्तत्वे तु "यावज्जीवमग्निहोत्रं जुहुयात्" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्येवमादिसामान्यश्रुतिविशेषोपसंहारार्थमभ्युपगन्तव्यम्। अग्निहोत्रं जुहुयात्स्वर्गकामः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति जीवता स्वर्गकामेन सता होतव्यं यष्टव्यं वेति। एवं च सामान्यश्रुतेरकिञ्चित्करत्वेनानर्थक्यमेव स्यात्। कामश्रुतेरेवाधिकारार्थत्वात्। यदि च सामान्यश्रुत्युपसंहारोऽस्य नाभ्युपगम्यते ततो विशेषश्रुतेरानर्थक्यं स्यात्। सामान्यश्रुतित एव स्वर्गकामस्यानुष्ठानोपपत्तेः। तदेतदाह—**अनुपसंहारे इति।** सामान्यश्रुत्यनुपसंहारे सत्येतस्या विशेषश्रुतेरानर्थक्यं स्यात्। स्वर्गकामस्य च तया सामान्यश्रुत्याऽनुष्ठानं चोदितमेव किं पुनर्वचनेन स्वर्गकामो यजेत स्वर्गकामो जुहुयादिति।

एवं मीमांसकेन चोदिते सति पूर्वपक्षवाद्याह—**स्यात्तावदिति।** यावन्त्यग्निहोत्रदर्शपूर्णमासादीनि कर्माणि नित्यानि सन्ति पुनष्काम-संबन्धेन विधीयन्ते तेषां पुनः श्रुत्यानर्थक्याद्भवतु स्वर्गकामादिपदं फल-प्रतिपादकम्, यानि पुनः केवलकामसंबन्धेन चोद्यन्ते यथा "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इत्येव-मादीनि कर्माणि तेषु पशुकामादिपदस्य निमित्तार्थत्वमविरुद्धम्। अथवाऽ-ग्निहोत्रादावपि स्वर्गकामादिपदस्य निमित्तार्थत्वं, न फलार्थता। न हि भावनाऽभावे स्वर्गादेर्भाव्यत्वं संभवति। यदि तु तथा सति सामान्यश्रुत्या-नर्थक्यं भवति, भवतु; किं कुर्मः? सर्वथा तावदीदृशः शब्दार्थो नावगम्यत इति। पूर्वापरितोषेण परिहारान्तरमाह—**अपि चेति।**

---

[1] 'नर्थक्यामित्यनर्थो' इति खपुस्तके पाठः।

**पुनरुपदेशाद्वा स्वर्गकामः पुनः प्रयोक्ष्यत इति नानर्थक्यम् ।**

**द्रव्येदमेव भगवान्ददर्श खलु बादरिः न द्रव्यगुणसंस्कारव्यतिरिक्तोऽस्ति शेषता ॥ द्रव्यगुणयोः खलु योग्यता । अतः कारकविभक्तितो वा क्रियायां शेषभावो गम्यते । संस्कारोऽपि संमार्गादिः शब्दतो वस्तुतो वा कर्मसंबन्धी तत्र प्रतिपन्नशेषत्वं तन्मुखेन क्रियां यायात्, यागादिस्तु प्रकृत्याऽकर्मको देवताकर्मको वा कथं स्वर्गेण संबध्येत ? भावनाकर्मणा तेन तदव्यवहितः संबध्येत, सा च नास्तीति गम्यमानो भगवान्बादरिर्द्रव्यगुणसंस्कारेष्वेव शेषभावं मेने इति ।**

अपरितोषकारणमिदं द्रष्टव्यम् । यथाऽग्निहोत्रादौ स्वर्गकामपदस्य फलार्थत्वमभ्युपगमयते तथा बलाद्भावनाभ्युपगमः प्राप्नोति । न हि भावना विना भाव्यत्वं स्वर्गादेरुपपद्यते ततश्चानिष्टाभ्युपगमापत्तिरिति मन्यमानः सर्वत्र कामिपदस्य निमित्तार्थतामेव दर्शयति । यद्वा, नैव विशेषश्रुतिः सामान्यश्रुतेरुपसंहाराय येन तदानर्थक्यं स्यात्, किं तर्हि स्वर्गकामस्यानुष्ठानं विधत्ते नास्वर्गकामस्य प्रतिषेधति । यत्त्वेतदानर्थक्यमस्मिन्पक्षे चोदितं तदपि न भवति पुनर्विधानेन द्विरनुष्ठानोपपत्तेः । तेन सामान्यश्रुतितस्तावत् स्वर्गकामोऽग्निहोत्राद्यनुतिष्ठति स्वर्गकामो जुहुयादिति पुनरनुष्ठानं स्यात् । अस्वर्गकामस्य तु सकृदेव । तेन पुनरनुष्ठानविधानार्थत्वाद्धनस्याव्यवच्छेदकस्यापि नानर्थक्यमित्याह—**पुनरिति ।**

बादरिणापि च भावनाभावं मन्यमानेन द्रव्यगुणसंस्कारेष्वेव शेषभावो न यागादिष्वित्युक्तमित्याह—**द्रव्येति ।**

एतदेव विवृणोति—**द्रव्यगुणयोरिति ।**

---

१ 'शब्दतो वा' इति 'क' पुस्तके पाठः ।

**अत्रोच्यते—**

**अनेकार्थत्वमन्यायग्नेनैकाधिकरणयतः ।**
**करोतिना तिङन्तेषु भावाभेदोऽनुमीयते ॥**

द्रव्यगुणयोर्व्रीह्यरुणिम्नोर्यागक्रयरूपयोर्धातुवाच्यसंयोगविभागरूपक्रिययोर्व्रीहिभिररुणयेतितृतीयाशब्दतो भूतभव्यसन्निकर्षवशाद्वास्तवतन्निवर्तकत्वेन वा शेषभावो गम्यते । संस्कारस्यापि ग्रहसमार्गाद् "ग्रहं समार्ष्टि" इति द्वितीयाशब्दतः संस्कारस्य च संस्कार्यनिष्ठत्वमिति । वस्तुतो वा ग्रहादिसम्बन्धोऽवगम्यते । तत्र प्रतिपन्नशेषत्वं सम्मार्गादिग्रहमुखेन ग्रहसबन्धिनीं ज्योतिष्टोमक्रियां गच्छेन्निवर्तनयोग्याम् । तत्र त्रयाणां क्रिया प्रति शेषभावः धातुवाच्ययोः संयोगविभागयोः क्रियाशब्दाभिधेययोरन्यतः साध्यत्वात् । यागस्तु यजेतेत्येवमादिशब्दात्प्रतीयमान स्वभावतोऽकर्मक एव प्रतीयते । देवतापूजात्मकत्वाद्वा यागस्य पूज्यमानदेवताकर्मत्व गम्यते । न कथञ्चित्कर्मभूतः स्वर्गसम्बन्धः । यदि तु भावना स्यात्ततस्तद्द्वारेण यागस्य स्वर्गसम्बन्धो भवतु । सा चोक्तेन प्रकारेण नास्त्येवेति मन्यमानो भगवान्बादरिर्यागस्य न स्वर्गशेषत्वमिति मेने इति । अत्र प्रतिविधत्ते—**अत्रोच्यते इति ।**

घट करोतीत्यत्र तावत्करोतिर्भावनावचनो घटमितिकर्मसंबन्धात् । न ह्यक्रियया कारक संबध्यते । यदि धात्वर्थसामान्यवचन एव करोतिः तत्करोत्यर्थस्य गोत्वादेव सामान्यात्मकत्वेन क्रियात्वात्कारकसंबन्धो न स्यात् । या अपि तद्व्यक्तय पाकाद्या लाघविकस्ता अपि संयोगविभागात्मानो न क्रियारूपा इति वक्ष्यति—

'धातूनामभिधानीया कर्मकर्तृसमाश्रयान् ।'

इत्यत्र, तथा—

'परोपाधिक्रियारूपो ज्ञायते न क्रियान्तरम् ।'

इत्यत्र च । अतस्तासामपि कारकसंबन्धो न युक्तः । अपि च धात्वर्थ सामान्यं करणरूपं तद्विशेषाश्च करणविशेषाः । यथोक्त भट्टपादैः —

१ 'भावभेदो' इति खपुस्तके पाठ. ।

**घटं करोतीति तावज्जननोत्पादनादिश्रुतिविषयां भावनां करोतिराचष्टे। स च पचत्यादिसमानाधिकरणोऽपि नान्यत्र वर्तितुमर्हति अनेकार्थत्वे त्वनैकान्तिकत्वात्तदभिधेयनिश्चयायोगाद्व्यवहाराङ्गतापत्तेः। अवगतसामर्थ्यानुसारेण च प्रयोगोपपत्तौ सामर्थ्यान्तरपरिकल्पनायोगात्प्रतीतबाधादप्रतीतकल्पनाच्च प्रयोगान्तरेऽपि प्रयोगान्तरनिर्ज्ञातस्यैव प्रत्ययात् किङ्करोतीति चोत्पादनाद्या एवाधिगमात्। एवं भावनाभिधानेन करोतिना समानाधिकरणतयाऽऽख्यातपदानां तद्विशेषाभिधायित्वमनुमीयते।**

'अन्यदेव हि धात्वर्थसामान्यं करणात्मकम्।' इति।

न च कारकं कारकान्तरेण संबध्यते। ननु भावनावचनत्वेऽपि करोतेर्भावनासामान्यमभिधेयं स्यात् तच्च नित्यत्वादसाध्यसामान्यं साध्यस्वभावत्वाद्भावनानाम्। न च साध्यसामान्यं सिद्धरूपं भवति अपि तु साध्यात्मकमेव साध्यस्वभावस्वविशेषात्मकत्वात्। तेन साध्यात्मकमेव सन्नित्यं न रूपान्तरमिति किं कुर्मः। यथोक्तं गुरुणा—

'अन्यदृच भावना नाम साध्यत्वेन व्यवस्थितम्।' इति।

अपि च करोत्यभिहितभावनासामान्यलक्षिता व्यक्तयः साध्यस्वभावाः क्रियात्मानः तेन लक्ष्यमाणभावनाव्यक्तिषु सम्पाद एव कर्मसंबन्धः। तस्माद्घटं करोतीत्यत्र भावनावचनकरोतिरिति निर्णीते किं करोति पचतीत्येवमादिषु पचत्यादिसामानाधिकरण्येन न धात्वर्थसामान्यवचनो भवितुमर्हतीति। अनेकार्थत्वस्यान्याय्यत्वात् शक्त्यन्तरकल्पनं हि तथा स्यात्। न च तद्युक्तम्। पूर्वशक्त्यनुसारेणैव प्रत्ययोपपत्तेः। यत्र गवादिशब्दे विस्पष्टमर्थान्तरं प्रतीयते तत्रागत्या शक्त्यन्तरमपि कल्प्यते। न चेह विस्पष्टार्थान्तरप्रतिपत्तिरस्ति स्वयैवारोप्यमाणत्वात्। यथा घटं करोति इत्यत्रोत्पादनावगम-

१ 'स च नाऽधिकरणोऽपि' इति 'क' पुस्तके पाठः। २ 'अनैकान्तिकत्वात्' इति ख पुस्तके पाठः। ३ 'योगात्तदव्यव' इति कपुस्तके पाठः। ४ 'परिगृहीतसामर्थ्या' इति ख-पुस्तके पाठः। ५ 'कल्पनात्' इत्येव पाठः कपुस्तके।

**यद्यपि प्रत्ययो[1] भेदान्न विशेषावगमायालं, पदं तु प्रकृतिभेदाद्भिन्नप्रकृत्यर्थानुरक्तप्रत्ययार्थप्रधानं, प्रत्ययोपि पौर्वापर्यनियमान्न पदवत् स्वतन्त्रः सामान्यमात्रे धियमादधाति, अपि तु प्रकृत्यर्थापेक्षया विलक्षणः[2] स्वार्थविशेषमेव समर्पयति। सर्वथा पदं तावद्विशेषे वर्तते। तेन तावत्स्वतोऽभेदवत्या[3] धात्वर्थोपधानव्यज्यमानस्फुटविशेषायास्तत्र विशेषाभिधानानुमानमविरुद्धम्।**

**ननु प्रत्ययस्य सामान्यमभिधेयमिष्टं तत्कथमुभयोः सामान्याभिधायिनोरैकाधिकरण्यम्?**

स्तथा किं करोति किमुत्पादयते किं भावयतीति स एवार्थो गम्यते इति न भावनावचनकरोतिसमानाधिकरणाः पचत्यादिशब्दाः पाकादिधात्वर्थानुबन्धनिबन्धनभावनाविशेषवचना इति निश्चीयते। अमुमेव श्लोकार्थं विवृणोति—**घटं करोतीति।**

अनेकार्थत्वे हि करोतेस्तदुच्चारणे सत्यजादिशब्दवदेवार्थे सन्देहः प्राप्नोत्यनैकान्तिकत्वात्। एवं च व्यवहारो नावकल्पेत। दृश्यते चासौ निश्चितार्थनिबन्धनः प्रकरणादिपरामर्शनिरपेक्षः। तस्माद्भावनार्थ एव करोतिरिति। ननु पचत्यादिष्वेक एव प्रत्ययः स कथमिव भावभेदं ब्रूयादित्याशङ्क्याह—**यद्यपीति।**

यद्यपि पचत्यादिष्वेकः प्रत्ययस्तथापि पचति गच्छतीति प्रकृतिभेदाद्भिन्नरूपं पदम्। तच्च प्रकृत्यर्थानुरक्तप्रत्ययार्थप्रधानम्। तेन प्रकृत्यर्थानुरागवशाद्भावः प्रतीयमानो विशिष्ट एव प्रतीयते। न च प्रकृतिनिरपेक्षः प्रत्ययः प्रयुज्यते। पदमिव पदान्तरनिरपेक्षः "परश्च"(३पा० सू०३ ३-१) इति "धातोः" (पा०सू०३-१ ९१) इति च पौर्वापर्यनियमात्। तेन न प्रत्ययो भावसामान्ये बुद्धिमादधत्यपि तु प्रकृत्यर्थानुरक्तभावविशेषमेव समर्पयति। तेन यद्यपि भावनागतो विशेषो नावगम्यते तथापि धात्वर्थानुरक्तभावनाव-

---

१ 'भेदान्न तद्विशेषायालम्' इति खपुस्तके पाठः। २ 'चक्षणः' इति कपुस्तके पाठः।
३ 'तेन स्वतोऽभेदवत्या अपि' इति खपुस्तके पाठः।

**उच्यते,**

**भेदोपहितसामान्यवचनेष्वपृथक्श्रुति ।**
**को राजा याति ? पाञ्चालराज इत्यभिधीयते ॥**

**प्रश्नवर्तिना हि सामान्यशब्देन व्यवच्छिन्नसामान्यविषयाः श्रुतयः परिदृष्टसामानाधिकरण्यप्रयोगाः, को राजा याति पाञ्चालराज इति यथा ।**

**युक्त एव चोत्तरं सामान्यनिर्देशोऽन्यथा प्रश्नगतं** गमाद्वार्थविशेषप्रतिपादनानुमानमविरुद्धम् । ननु चान्वयव्यतिरेकोद्धृत भावनासामान्य प्रत्ययस्याभिधेय न पाकादिविशेषास्तेन यद्यपि प्रकृत्यर्थानुरागो भावस्य गम्यते तथापि न विशिष्टः प्रत्ययार्थोऽवक्षासन्निधियोग्यताहेतुकत्वाद्विशिष्टावगमस्य । यदि तु विशिष्टमत्र वाच्यमुच्येत तथा सत्यन्विताभिधान, न चैतदिष्टमित्यभिप्रायेण चोदयति— **नन्विति ।**

प्रत्यया भावनासामान्यवचन, करोतिरपि भावनासामान्यवचन एव, न च द्वयोः सामान्यवचनयोः सामानाधिकरण्यम् । तत्र परिहारमाह — **उच्यते इति ।**

यद्यपि प्रत्ययस्य सामान्यमभिधेय तथापि पचत्यादिपदे प्रकृत्युपात्तपाकादिधात्वर्थभेदोपहित सन्निधानादिभिस्तद् गम्यते । अतश्च शुद्धसामान्यवचनेन करोतिना सह प्रकृत्यर्थानुरक्तसामान्यवचनस्य प्रत्ययस्य सामानाधिकरण्यमविरुद्धम् । यथा को राजा याति ? पाञ्चालराज इत्यत्र शुद्धसामान्यवचनस्य राजशब्दस्य पाञ्चालराज इत्यनेन पाञ्चालविशेषोपहितराजसामान्यवचनेन । एतदुक्तं भवति—यथा पाञ्चालराज इत्यत्र सन्निधानादिभिरभिधानाद्वा पाञ्चालविशेषोपहिते राजार्थे गम्यमाने को राजेत्यनुपहितसामान्यवचनस्य शब्दस्योपहितसामान्यविषयेणोत्तरवर्तिना राजशब्देन सामानाधिकरण्य तथात्रापीति नान्विताभिधानचोद्यं नाप्यसामानाधिकरण्यम् । एतमेव श्लोकं विवृणोति— **प्रश्नेनेति ।**

नन्विदमप्ययुक्तमत्र सामानाधिकरण्यं न दृष्टान्तीभवितुमर्हति । प्रश्नप्रक्रमलभ्यत्वेन राजार्थस्योत्तरे पुनरुपादानानर्हत्वादित्याशङ्क्याह— **युक्त एवेति ।**

**तदपेक्षणीयं स्यात् विशेषतस्तु भावनाया असंविज्ञातपदभेदत्वात्परोपधानव्यज्यमानविशेषायाः । तस्मान्न सिद्धसाधनं न विपर्ययसाधनं नाप्यदृष्टान्तता ।**

**भावाभावे प्रयोगस्तु न द्विधापि निरीक्षितः ।**
**अन्ततः सोऽपि धात्वर्थगोचरो लक्ष्यते तथा ॥**

**घाटा ध्वनतीति हि भाव्याभावेन भावनाभाव उच्यते । सर्वश्च[3] धात्वर्थः किञ्चिदसदुत्पादयति ध्वननमपि सुखं दुःखज्ञानं वाऽन्ततो धात्वर्थ एव भाव्यः ।**

पाञ्चाल इत्येतावत्युक्ते कः पाञ्चालः किं राजा किं ब्राह्मण इति विशेषापरिज्ञानात् प्रश्नगतो राजार्थः सबन्धनीयः । ततश्च मतिविप्रकर्षः स्यात्, उपादाने तु झटिति संबन्धावगमान्नायं दोषो भवति । एतदुक्तं भवति-अस्त्यत्र राजार्थेन प्रयोजन स किं प्रक्रमलभ्यो भवतु उत शब्दोपादानप्राप्त इति । तत्रोपादाने सत्यविप्रकृष्टा प्रतिपत्तिः स्यादिति शोभन एवायं प्रयोग इति । भावनायास्तु पचत्यादिपदं विशेषेण सामान्यनिर्देश एव कर्तव्यः, न हि तत्र भावनाविशेषप्रतिपादकः कश्चिच्छब्दोऽस्ति । तेन किङ्करोतीति पृष्टे पचतीतिभावनासामान्यप्रत्ययोच्चारणेनैवोत्तरं दातव्यम् । इतरत्र तु को राजेति पृष्टे युधिष्ठिरादिशब्दसम्भवात् । तस्मात्पाकादिशब्दोच्चारणे प्रत्ययसन्निधानादिभिर्विशिष्टे भावे गम्यमाने न करोतिशब्दसाधितस्य साधनं, येनानर्थक्यात्सहप्रयोगानुपपत्तिः स्यात् । नापि विपर्ययसाधनम् । सामानाधिकरण्यदर्शनात् । यथा को राजा याति पाञ्चालराज इति । नादृष्टान्ततेत्यस्यायमर्थः- न चायमसमत्पक्षोऽविद्यमानदृष्टान्तोऽस्यैव दृष्टान्तस्य विद्यमानत्वात् । तेन सति दृष्टान्त न विरुद्धो हेतुरिति । अथवा वृत्तः शिशपात्यस्यास्मत्पक्षेपि नादृष्टान्तता । यथैव ह्यत्र सामान्यविशेषनिबन्धनं सामानाधिकरण्यं तथैव किंकरोति पचतीत्यत्र करोतिप्रत्यययोः । यत्पुनः पूर्वपक्षेऽभिहितं भावाभावे प्रयोगस्येति, तत्र परिहारमाह—**भावाभावे इति ।**

आख्यातसमानाधिकरणस्य नामसमानाधिकरणस्यैव करोतेर्भावनाभावे न

---

१ 'न विपर्ययासाधन' इति कपुस्तके पाठ । २ 'भाव्याभावेन हि' इति खपुस्तके ।
३ 'सर्वस्तु' इति खपुस्तके ।

**न हि सर्वत्र धात्वर्थस्य करणतैव कर्मता ऽपि तु कश्चित्तन्मात्रनिर्वृत्तिविवक्षायाम् ।**

**का क्रिया पाक इति [1]चेहापि द्विविधत्वाच्छब्दार्थस्य श्रौतलक्ष्यभेदेन नाभावो भावनायाः शब्दतस्तद्विशेषलक्षणाप्रवणत्वात्पाकशब्दस्य ।**

**तिङन्तेऽपि तर्हि लक्ष्य एव भावोऽस्तु ।**

प्रयोगो दृष्टः । येन धात्वर्थसामान्यवचनत्वमध्यवसीयेत । तथा हि—घण्टा ध्वनतीत्यत्र भाव्याभावेन भावामात्र उच्यते । स चायुक्तः सर्वस्य धात्वर्थस्यान्योत्पादकस्य भावत्वेन भाव्यान्वितत्वात् । अस्ति चात्रापि मृदुतीव्रध्वनिनिष्पाद्य सुखं दुःखं वा । यदि त्वकर्मकत्वाद्धातोः सुखं दुःखं वा ध्वनतीत्येवं सम्बन्धानवगमाद्भाव्यत्वं नाभ्युपगम्यते ततोऽन्ततो धात्वर्थमेव भाव्यं ब्रूमो ध्वननं करोतीति संयोगविभागौ तज्जनितः शब्दो वा ध्वननम् । परिस्पन्दश्च करोत्यर्थ इति । यदपि का क्रिया पाक इत्युदाहृतं तत्रापि भावनाविशेषनिबन्धनं सामानाधिकरण्यं न श्रुतपाकनिबन्धनं, येन धात्वर्थवचनता करोतेः स्यात्, तदेतदाह–**लक्ष्ये तथेति ।** तत्राद्यातसमानाधिकरणस्य करोतेर्यथा भावनामात्रे न प्रयोगस्तथा दर्शयति—**घण्टेति ।**

ननु धात्वर्थस्य करणत्वाभ्युपगमात्कथमिव कर्मत्वमुच्यते इत्याशङ्क्याह— **नहीति ।**

यद्यपि करणं धात्वर्थस्तथापि व्यापारसाध्यत्वात्कर्मतापि । तेन यदा धात्वर्थमात्रनिर्वृत्तिर्विवक्षिता भवति नान्यस्य फलस्य तदा कर्मनिर्देशो न विरुध्यते । लक्ष्यते तर्हीति यदुक्तं तद्विवृणोति—**का क्रियेति ।**

यद्भावनाप्रतिपादकशब्दाभावेन भावनाभावे सति का क्रिया पाक इति सामानाधिकरण्यं करोतेरुदाहृतं तदयुक्तम् । पाकशब्द एव हि भावनाप्रतिपादकः । न ह्यभिधेय एव शब्दार्थ इति व्यवस्था किं तर्हि यत्परः शब्दः स शब्दार्थ इति पचिना लक्षितभावनाविशेषनिबन्धनमपि ऐकाधिकरण्यमत्रेति न दोषः । यदा तु लाक्षणिकभावनानिबन्धनमैकाधि-

1 'इति च द्विविध' इति खपुस्तके । २ 'श्रौतभेदेन' इति खपुस्तके ।

**नैतत्सारम्, यतः सर्वत्र कः पाको बुद्धिभेदमपन्हुते न भावनापरामर्शमन्तरेण च भाक्तमेतत् ।**

**इदं भवान् पृष्टो व्याचष्टां पाकः पचतीत्यत्र धात्वर्थो भिद्यते भवति । को हि स्फुटं प्रत्ययभेदमवजानीते । तथा हि तिङन्ते भाव्यः स गम्यते न तथाभूतो घञन्ते । भावे तद्विभानात्, शुद्धस्य च धात्वर्थस्य तत्त्वव्याख्यानात् ।**

**'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इति ।**

**तर्हि भाव्यत्वं भावनासंस्पर्शकृतमिति तिङन्तानां सोऽर्थः । गम्यमानत्वं हि तिङन्तघञन्तयोर्धीर्न[1] भिद्यताविशेषात् ।**

**न च साधनसाध्यसम्बन्धाद्[2]देशावगमः स्थीयते इत्य[3]-प्रसङ्गात् ।**

कस्यं, तिङन्तेऽपि तर्हि कस्मान्न भवति ? नास्त्यभिधाने प्रमाणमन्यथापि करोतिसामानाधिकरण्यदर्शनादिति चोदयति—**तिङन्तेऽपीति ।**

तत्र परिहारमाह—**नैतत्सारमिति ।**

यतः कः पाकः पचतीत्यत्र बुद्धिभेदो न स्यात्, अस्ति चासौ । तथा हि-पाक इत्यत्र सिद्धरूपो धात्वर्थो गम्यते पचतीत्यत्र साध्यरूपः । तच्च साध्यत्वं भावनासंस्पर्शकृतं, तत्संस्पर्शश्चेत्र स्याद्यदि सा प्रत्ययेनाभिधीयेत । ततोऽत्राभिधेयभावनानिबन्धनमकाधिकरण्य न पाकवदगम्यमानापत्त्वमित्यर्थः । अमुमेव श्लोकार्थं विवृणोति—**इदमिति ।**

नन्वनभिधानेऽपि भावस्य पचतीत्यत्र प्रत्ययप्रतिपादितकर्तृकारक-सम्बन्धाद्धात्वर्थस्य साध्यत्वावगमो भविष्यतीत्याहशङ्क्याह—**नचेति ।**

१ 'घञन्तयोर्विभिद्येत' इति खपुस्तके पाठ । २ 'साधनसम्बन्धात्' इति कपुस्तके पाठः । ३ 'इत्यप्रसङ्गात्' इति खपुस्तके पाठः ।

**सङ्गात् शब्दोपकल्पितास्तिङन्तेष्वपि भेद इति चेत्। अस्तु तावच्छब्दार्थभेदो[1] वस्तुन्यप्युपपादयिष्यामः। नन्वेवं भावनाया अपि साध्यरूपाया भावनान्तरापातस्तदपि तथेत्यनवस्था।**

**यदि मतं व्यापारो हि सा[2] स्वरूपमेव तस्यास्तादृशं[3] पराधीनोपजननम्। अतः[4] स्वरूपात्तथात्वसिद्धे र्नान्यसंस्पर्शव्यपेक्षेति।**

**धात्वर्थोऽपि तर्हि[5] तथाऽस्तु। तथाहि—वस्तुतः सोऽपि तथा अतथा वा भवन्नापादिततथाभावः स्वशब्दव्यापारात्मोपादीयते।**

एव भेदः कल्पित पश्चान्निदर्श्यते न तात्त्विको घटते इति न तु पाकादौ शक्त्यभावात्कल्पितो न वा निदर्श्यते इति चोदयति—**शब्दोपकल्पितेति।**

तत्र परिहारमाह **अस्त्विति।**

तिङन्तस्य तावदर्थरूप भावनाऽङ्गीकृत तत्तु तात्त्विकमित्यनन्तरमेव वक्ष्यामः। ननु यदिद भावनासंस्पर्शकृत, धात्वर्थसाध्यत्वमुक्त तदयुक्तम्। स्वाभाविकसाध्यत्वसम्भवात्। यदि तु भावनासंस्पर्शकृतमभ्युपगम्यत ततो भावनाया अपि साध्यत्वप्रतीतभावनानन्तरसंस्पर्शकृत साध्यत्व स्यात्। तथा सत्यनवस्थितिरेवाति। चोदयति—**नन्वेवमिति।**

ननु व्यापाररूपा भावना, व्यापारश्च साध्यात्मक एव न व्यापारान्तरसंस्पर्शमपेक्षते इत्याशङ्कते—**यदीति।**

एवमाशङ्क्योत्तरमाह -**धात्वर्थोऽपीति।**

धात्वर्थोऽपि साध्यस्वभाव एव किमिति भावनासंस्पर्शमपेक्षते। अथापि संयोगविभागगुणात्मकत्वादसाध्यरूपस्तथापि स्वशब्दैरापादितसाध्यत्व· पचत्यादिषु प्रतीयमानः किमिति भावनासंस्पर्शमपेक्षते। साध्यस्वभावो धात्वर्थो

१ 'शब्दार्थ भेदो' इति कपुस्तके पाठः।

२ 'सा स्वरूपमेव' इति खपुस्तके पाठः। ३ 'तादृगमपरानोप' इति कपुस्तके पाठः

४ 'अतोरूपात' इति खपुस्तके पाठः। ५ 'तर्हि' इति खपुस्तके नास्ति।

**घञन्तादिष्वपि कारकसम्बन्धोपपत्तेरन्यथाऽव्यापारे कारकसम्बन्धायोगादव्यापारसम्बन्धिनः कारकत्वानुपपत्तेः । क्रियासम्बन्धप्रभावितत्वात्कारकभावस्य ।**

**बुद्धिभेदस्तु पाकादिषु प्रत्ययोपादानेन भिन्नभावनानुभवात् । अनभिभवात्पचत्यादौ न चानभिभूतरूपमन्यथाशक्यम् घदर्शनं व्यापारान्तरानिदर्शनेन निदर्शयति भावनाया इव । न च भिन्नसाध्ययोरैकशब्द्यं विरुद्धं भेदाभेदयोरिव गोत्वादिषु भिन्नप्रकृतिप्रत्ययोपादानत्वात् ।**

**साध्यभावरूपप्रतीतिनिदर्शनाभ्यां च धात्वर्थस्य तिङन्तेषु भावनाभिव्यक्तौ धात्वर्थस्य कर्मत्वप्रसङ्गो न करणत्वं स्यात् ।**

धात्वापादितत्वाभावो वेत्यत्र किं प्रमाणमित्यपेक्षिते सत्याह —**घञन्तादिष्वपीति ।**

**देवदत्तेन** पाकः पचनं पक्तिरिति कारकसम्बन्धदर्शनाद्धातवः साध्यवाच्येयाः स्मरणात् । गोत्वमिति त्वप्रत्ययो व्यतिरेकार्थः । शाबलेयस्य गोत्वमिति वैयधिकरण्यप्रयोगनिदर्शनात् । ननु गोत्वमित्यत्र प्रकृतिव्यतिरेकार्थेति कथं गम्यते । न ह्यत्राव्यतिरेकः प्रतीयते । उक्तमत्र गोः शाबलेयसामानाधिकरण्यप्रयोगदर्शनादिति । भेदश्चैव प्रकृतिप्रत्ययाभ्यां ज्ञायते । इति किञ्चिद्विकृता गौः शाबलेयस्येति प्रयोगे गोपिण्ड इति च गोशब्द एवाव्यतिरेकेणार्थो दृश्यते । यत्तु गोत्वमित्यत्राव्यतिरेको न गम्यते तत्र प्रत्ययोपादानेन व्यतिरेकेणाभिभवात् । यदि तु पचतीत्यादिषु साध्यस्वरूपधात्वर्थप्रतीतेः पाकं करोतीति निदर्शनाच्च भावनाभ्युपगम्यते ततो धात्वर्थस्यैव कर्मत्वं प्राप्नोति न करणत्वम् । न ह्येकस्य साध्यत्वमुपपद्यते, नापि पाकमिति निदर्शनमित्याह—**साध्यभावेति ।**

१ 'साध्यरूपप्रतीति' इति कपुस्तके पाठः । २ 'ततोऽप्यु' इति खपुस्तके नास्ति ।
३ 'करणत्वं न' इति कपुस्तके ।

**तस्माद्धात्वर्थ एव व्यापारात्मा धातुशब्दोपादानः फलभवनसमर्था भावनाक्रिया चेन्न सांप्रतम् ।**

**तदेतदसमञ्जसम् । तथाहि—**

**दृश्यमाने वस्तुभेदे नेष्टा शब्दार्थमात्रता ।**
**प्रत्ययार्थेनाभिभवः सिद्धे तद्भावनिश्चयः ॥**

**दर्शयिष्यते ह्यव्यापारात्मनो धात्वर्थाद्भेदवती क्रियाऽतो न शब्दसामर्थ्यविलसितमिति युक्तम् । असति हि वस्तुनि तथा नाम भवेदपि ।**

तस्मादलं धात्वर्थातिरिक्तभावनया धात्वर्थ एव व्यापारात्मना धातुनोपादीयमानः प्रत्ययाच्च फलभवनसमर्थतया गम्यमानः फलभवनसमर्थव्यापारवचनभावनाक्रियाशब्दार्थ इत्याह—**तस्मादिति** ।

तदेतन्निराकर्तुमाह—**तदेतदिति** ।

यदि धात्वर्थभावनयोस्तात्त्विको भेदो न स्यात्ततः शब्दोपकल्पित एवायं भेद इत्यभ्युपगम्येत, न त्वेतदस्ति प्रयत्नपरिस्पन्दयोर्धातुवाच्यसंयोगविभागातिरिक्तयोः प्रत्यक्षसिद्धत्वात् । तथाहि चलतीत्यक्षजातः प्रत्ययः संयोगविभागातिरिक्तं परिस्पन्दमालम्बते यथा संयोगविभागयोर्नालम्बनत्वं तथोपरिष्टाद्दर्शयामः । प्रयत्नोऽपि मानसप्रत्यक्षग्राह्यो यस्मिन्सति भूतानि प्रवर्तन्ते स आत्मकर्तृको व्यापारः आत्ममनःसंयोगजेन प्रत्यक्षेण गृह्यते । तथाहि—गच्छन्क्रममाणो वा प्रयत्नवन्तमात्मानमवैति । स चेच्छासंकल्पाभ्यामन्यः कथमिष्ट्वा संकल्प्य च कश्चिन्न प्रवर्त्तेत । नानयोर्भूतप्रवृत्तिव्यभिचारः न च गमनविष्णुक्रमणादेरात्मव्यापारत्वं संभवति येन स एव प्रयत्न इत्युच्येत । संयोगविभागात्मकत्वेन सर्वगतात्मकर्तृकत्वानुपपत्तेः । तेनास्ति विष्णुक्रमणाद्यतिरिक्तः प्रवर्तेऽहमित्येतत्प्रत्ययालम्बनभूतः प्रयत्नः भूतप्रवृत्तिश्च कादाचित्कीतिनात्र भवितव्यं कारणेन । न चात्मन एव कारणत्वं संभवति । सर्वदा प्रवृत्तिप्रसङ्गात् । तत्र कादाचित्क एवात्मव्यापारः कारणमिति वक्तव्यम् । स च प्रयत्नः । तत्र किं कारणमिति चेत् । अदृष्टचो-

१ इतोऽग्र कपुस्तकस्य द्वाचत्वारिंशत्तम पत्र त्रुटितमिति ग्रन्थस्त्रुटितः ।

दित आत्मैवेति वदामः। नन्वदृष्टचोदनमपि कादाचित्कमिति कादाचित्कमेव कारणं वक्तव्यमित्यनवस्थाप्रसङ्गः। नैष दोषः नियतकालफलदानस्वभावत्वात्कर्मणो नियत एव काले प्रयत्नादिहेतुकफलोपभोगाय कर्तारमात्मानं चोदयतीति किमत्र कुर्मः। प्रतिबन्धकवशेन फलदानं प्रति कालनियमोपपत्तेः। नियतकालमदृष्टचोदनमित्यदोषः। न च भूतानामेवादृष्टचोदनम्भवति कर्मणि। अदृष्टशब्दाभिधेये तदाङ्कर्तृत्वानुपपत्तेः। कर्मणि विधिना नियुज्यते प्रतिषिध्यते वा स कर्मकरो भवति। आत्मनश्च नियोगप्रतिषेधौ नाचिद्रूपस्थायिभूतात्मकशरीरस्य। तेन यत्रापि विष्णुक्रमणादौ भूतानां कर्तृत्वमुपलभ्यते तत्राप्यर्त्विगादिवदन्यव्यापारे नदिति साङ्गप्रयोग आत्मकर्तृक इति। तदुक्तम्

"तदुद्देशप्रवृत्तैश्च या या देहेन्द्रियैः क्रिया।
क्रियते पुरुषेणैव सा सर्वा तत्कृतोच्यते॥" इति।

तेनात्मनोऽदृष्टचोदनं न भूतानामिति कादाचित्कप्रवृत्तिसिद्ध्यर्थं वक्तव्यः प्रयत्न इति। अन्ये त्वाहुः इच्छासंकल्पाभ्यां प्रयत्नः, तौ चोपकारिवस्तुस्मरणात्। तच्च ग्रहणपूर्वकम्। यत्तु सतोरपि तयोः कदाचिन्न यतते तदनन्तरमालस्याद्युपचितबुद्धिप्रतिबन्धात् अप्रतिबन्द्धयोस्तु कारणत्वं किमदृष्टचोदनेनेति। तदयुक्तम्। अदृष्टचोदनस्यावश्याभ्युपगमनीयत्वात्। सर्वत्र हि कर्मफलम्। अपि च कदाचिदिच्छासंकल्पसम्भवेऽपि न प्रयतते। तथा च वक्तारो भवन्ति 'वर्षमिच्छन्तः कृतसंकल्पाश्चैतावन्तं कालमत्र न प्रवृत्ता इदानीं शुभेन कर्मणा प्रवृत्ता निवृत्ता वा' इति। विना चेच्छासंकल्प दैववशात्क्वचित्प्रवृत्तिर्दृश्यते। तेनादृष्टचोदनमेव प्रवर्तकम्। इच्छासंकल्पयोस्तु प्रसङ्गान्वयः। तस्मादस्ति प्रयत्नपरिस्पन्दात्मिका धात्वर्थव्यतिरिक्ता भावनेति न शब्दोपकल्पितो भेद इति वाच्यम्। यदपि भावनास्पर्शनिरपेक्षधात्वर्थसाध्यत्वमिद्धयर्थमुक्तम्। धात्वर्थसमाप्यभूतमेवार्थं वदन्ति। यत्तु पाकादौ साध्यत्वं न गम्यते तत्प्रत्ययार्थेन सिद्धत्वेनाभिभूतत्वादिति तत्राप्याह प्रत्ययार्थेनेति। यदि धात्वर्थस्य स्वाभाविकसाध्यत्वे किञ्चित्प्रमाणं भवेत्ततः पाकादौ साध्यत्वाप्रतिपत्तिरपि भवेदित्युच्येत। न तु तदस्ति पचत्यादौ भावनासंस्पर्शकृतसाध्यत्वोपपत्तेः। पाकादौ च देवदत्तेन पाक

**सम्बन्धग्रहणापेक्षत्वाच्च शब्दस्य न वस्तुरूपकल्पने[1] विभवः। निश्चिते तु धातुभिर्भाव्यनयहोपादानेऽभिभवा-भिधानं युक्तम्[2]। न चेह[3] तथा प्रमाणाभावात्। साधन-संबन्धस्य गम्यमानभावनाविषयत्वात्।**

**तथादर्शनाच्छङ्कुलया खण्ड इति।**

इति कारकसम्बन्धस्य लक्ष्यमाणभावनाविषयत्वात्। तथाहि—एवमर्थेऽत्र समाप्यते देवदत्तेन पाकः क्रियते न देवदत्तेन पाक इत्येतावति स्थीयते इत्यर्थः। पूर्वार्द्धं विवृणोति—**दर्शयिष्यते इति।**

यद्यपि दृश्यमाने वस्तुभेद इत्यनेन भेदप्रमाणमुपन्यस्त तथापि विस्पष्टप्रमाणाभिप्रायेणोक्त **दर्शयिष्यते इति।**

'विक्लिद्यन्ति पचन्तीति न विशेष प्रकल्प्यते।'

इत्यत्रानन्तरमेव तथा।

'देवदत्तस्य करणं न पाकभाविकल्पते।'

इत्यत्र। यदि धात्वर्थव्यतिरिक्ता भावना नाभ्युपगम्येत ततः संब-न्धिन्यगृहीते सति अगृहीतसंबन्धः प्रत्ययः कथमिव भावनाबुद्धिं कुर्याद्येन शब्दोपकल्पितो भेद इत्युच्यते, इत्याह—**सम्बन्धेति।**

विभवः सामर्थ्यमित्यर्थः। पाकस्याभिनिर्वर्तनं करोतीत्यत्र यद्यपि पाकादि-निर्वर्तनादन्यः करोत्यर्थो न प्रतीयते तथापि पाकादिविषयकरोत्यर्थे करोतेर्व्युत्पत्तिः। अस्ति च पाकादिकर्मकः पाकादिकरणको वा करोत्यर्थः निर्वर्तनत्वविद्यमान एवोपचरितो भवतस्तु पाकादिव्यतिरिक्तभावनाभावान्न कर्त्रा चेत्संम्बन्धग्रहणं सम्भवतीति न भेदकल्पनोपपत्तिः। इदानीमुत्तरार्द्धं विवृणोति—**निश्चिते त्विति।**

**साधनसम्बन्धस्येति।** 'देवदत्तेन पाकः' इति धात्वर्थेन लक्ष्यमाणाध्या-ह्रियमाणक्रियतेः शब्दवाच्यभावनाविषयत्वादित्यर्थ। **दृश्यते च गम्यमान-भावनाविषयः कारकसम्बन्ध इत्याह—तथेति।**

१ 'वस्तुकल्पने' इति कपुस्तके पाठ। २ 'निश्चितैर्भिर्भावनाहेयोपादाने सति भावाभिभ-वाभिधानम्' इति खपुस्तके। ३ न च तथा इयेव खपुस्तके।

**किञ्च**

**विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्प्यते ।**

**ऋते व्यापारनानात्वात् कर्तृभेदोऽपि वै कुतः ॥**

**न तावत्तिङन्तेषु धात्वर्थ एव व्यापारात्मोपादीयते विक्लिद्यन्ति पचन्तीति धात्वर्थाभेदात्प्रत्ययाभेदप्रसङ्गात् ।**

**कर्तृभेदान्नैवमिति चेत् । न, व्यापारभेदमन्तरेण तदनुपपत्तेः । तथाहि साधनानां नियोक्तृत्वे कर्तृलक्षणे देवदत्तादय एव कर्तारो न तण्डुलाः । अनुगामितया धातुनाभिधीयमानव्यापारत्वे तु तण्डुला एव कर्तारः । एतेन भिनत्ति विदलति छिनत्ति लुनाति भवतीत्यादयो व्याख्याताः । तस्माद्धात्वर्थातिरिक्तो व्यापार उपेयः यत्कृतोऽर्थभेदः कर्तृभेदश्च ।**

एतावत्युक्ते शङ्कुलया खण्ड क्रियते इत्येतावत्पर्यन्तं वक्तव्यं समाप्यत इति । इतश्च धात्वर्थव्यतिरिक्ता भावनाऽस्तीत्याह किञ्चेति ।

यदि धात्वर्थव्यतिरिक्ता भावनाभ्युपगम्यते तदा विक्लिद्यन्ति पचन्तीत्यनयोरपि शब्दयोस्तुल्यार्थत्वं प्राप्नोति । उभयोरपि विक्लित्यात्मकपाकविषयत्वात् । ननु पचन्तीतिप्रयोगे पाचकदेवदत्तादिकर्तृकः पाकोऽभिधीयते विक्लिद्यन्तीति च तण्डुलकर्तृकोऽतः कथमैकार्थ्यमित्याशङ्क्याह—**ऋते व्यापारेति ।**

सत्यं कर्तृभेदे सत्यर्थभेदो भवति । स एव धात्वर्थातिरिक्तव्यापारानभ्युपगमे न युक्तः । तथाहि—साधननियोजकस्य कर्तृत्वे देवदत्तादय एव कर्तारो न तण्डुलाः, धातुनाऽभिधीयमानव्यापारस्य तत्त्वे तण्डुला एव पाकस्य तण्डुलव्यापारत्वात् । पाकाद्यतिरिक्तव्यापाराभ्युपगमे तु देवदत्तादेरपि प्राधान्याभिहितव्यापारस्य कर्तृत्वाद्भवति कर्तृभेदोऽर्थभेदश्चेत्यर्थः । तत्र पूर्वार्द्धं तावद्विवृणोति—**न तावदिति ।**

उत्तरार्द्धं विवृणोति—**कर्तृभेदादिति ।**

**अपरः कल्पः। स्यान्मतं कर्मसमवायिक्रियेष्वेव धात्वर्थातिरिक्तो व्यापारोऽभ्युपगम्यते कर्तृस्थक्रियेषु कथमिति ?**

**उच्यते**

**ऋते व्यापारनानात्वात् कर्तृभेदोपि वै कुतः।**

भिनत्तीति प्रयोजकदेवदत्तादिकर्तृको व्यापारोऽभिधीयते। विदलतीति तु प्रयोज्यकाष्ठादिकर्तृको धात्वर्थः। तथा छिनत्तीति देवदत्तादिकर्तृक एव द्वैधाभवतीति प्रयोज्यवृक्षादिकर्तृकः। इतरथा चैषां शब्दानां धात्वर्थव्यतिरिक्तव्यापारानभ्युपगमे तुल्यार्थत्वं स्यात्। धात्वर्थव्यतिरिक्तो भाव इति श्लोकार्थफलं दर्शयति—**तस्मादिति**।

इदानीं व्याख्यानान्तरं करोति—**अपर इति**।

यदा चोत्तरार्द्धस्यार्थान्तरं व्याख्यायते तदा तदर्थोऽपि पूर्वार्द्धस्यैव दर्शयितव्यः। शक्यते च दर्शयितुम् एकार्थप्रतिपादनेन सूचितत्वात्।

अनेन शङ्कां दर्शयति। अयं चाशङ्कार्थः कर्मसमवायिक्रियेषु विक्लिद्यन्ति पचन्तीत्येवमादिपूर्वोक्तेन प्रकारेण धात्वर्थातिरिक्तः कर्तृव्यापारो बोद्धुं शक्यते। तदनभ्युपगमेऽभिधीयमानव्यापारत्वे च कर्तृलक्षणे सति तण्डुला एव सर्वत्राभिधीयमानव्यापारत्वेन कर्तारः प्राप्नुवन्ति। न हि तण्डुलादिकर्मसमवायिना पाकेन प्रयोज्यव्यापारेणाभिधीयमानेनाभिधीयमानव्यापारा देवदत्तादयो भवन्ति तेनावश्यं कर्मसमवायिक्रियेषु देवदत्तादीनामभिधीयमानव्यापारत्वसिद्ध्यर्थं प्रयोज्यव्यापारातिरिक्तो व्यापारोऽभ्युपगन्तुं शक्यः। कर्तृस्थक्रियेषु तु यजते यजन्तीत्येवमादिषु शब्देषु यागधात्वर्थस्य यजमानर्त्विक्स्थत्वादुभयोरप्यभिधीयमानव्यापारत्वेन कर्तृत्वापत्तेः। असत्यपि व्यापारान्तरे भवति कर्तृभेदोऽर्थभेदश्चेत्यव्यापकमिदं कर्तृभेदकारणमिति। एतदाशङ्कोत्तरत्वेनोत्तरार्द्धं योजयति—**उच्यते इति**।

'ऋत्विजो यजन्ति' 'यजते यजमानः' इत्यगुणतो धातुनाऽभिधीयमानव्यापारस्य कर्तृत्वात्संकल्पविशेषस्य च यज्यभिधेयस्य यजमानव्यापारत्वाद् 'यजन्ति याजकाः' इत्यनुपपत्तिः। धात्वर्थातिरिक्तव्यापारप्राधान्यविवक्षायां तूपपद्यते। नन्वनभिधानेऽपि व्यापारभेदस्य स्वातन्त्र्यविवक्षाभेदात्कर्तृभेदः करणभेद इवातिशयविवक्षाभेदादुपपद्यते। किमिदं स्वातन्त्र्यम्? साधनानां नियोक्तृत्वम्। काष्ठादीनि पचन्तीति

यदि यजत इत्यत्र धात्वर्थ एव क्रिया 'यजन्ति याजकाः' इत्यत्रापि सैवेति कर्तृभेदोऽपि न स्यात्, [illegible]। 'यजते' इत्यत्र यजमानः कर्ता 'यजन्ति' इत्यत्र ऋत्विजः। न चैव कर्तृभेदो व्यापारभेदं विना घटत इत्याह—ऋत्विज इति।

प्राधान्येन तु धातुनाऽभिधीयमानव्यापार[illegible] कर्तृत्वाभिमान[illegible] कर्तुः यजरूपस्य प्रयोगात्तस्य च [illegible] यजमान एवोभयत्र कर्ता स्यात्। न चैवमस्ति। तस्मात्कर्तृभेदाद्व्यापारभेदेन विना तदनुपपत्तेः [illegible] व्यापारभेदं तत्राह—धात्वर्थातिरिक्तेति।

इतरोऽन्यथा प्रत्यवतिष्ठते—नन्वनभिधानेऽपीति।

यद्यपि [illegible] व्यापारान्तरं नाभिधीयते [illegible] तथापि धात्वर्थ एव स्वातन्त्र्यविवक्षाभेदात्कर्तृभेदो भवति। [illegible] यजेर्यदर्थे ऋत्विजां स्वातन्त्र्यं विवक्ष्यते तदा 'यजन्ति याजकाः' इति प्रयुज्यते। यजमानस्तु स्वातन्त्र्येण विवक्षितः 'यजते यजमान' इति। विवक्षातो हि कारकाणि भवन्ति यथा प्रदीपेन पश्यामि इति व्यवहितमपि दीपं करणत्वेनोपादिशन्ति, दर्शनक्रियायास्तस्यातिशयो विवक्षित इति। इतरोऽनुपपत्तिमाशङ्क्य पृच्छति—किमिदमिति।

अन्यस्तु प्रसिद्धमेवैतदित्याह—साधनानामिति।

यः साधनानि नियुङ्क्ते सोऽसौ स्वतन्त्र इत्याख्यायते। एतदुपपादयति—काष्ठादीनीति।

१ 'धातुना विधीयमानव्यापारस्य' इति [illegible] पुस्तके। २ '[illegible]' इति ख पुस्तके।
३ 'नियोजकत्वम्' इति ख पुस्तके।

**कथम् ? नियोज्यान्तराभावान्नियोक्तृत्वेविवक्षा प्रयोज्ये न स्यात्[1] । तस्मात् प्राधान्येन प्रतिपाद्यमानव्यापारता स्वातन्त्र्यम् । तथा चोक्तम्[3]–स्थालीस्थे[2] प्रयत्ने कथ्यमाने स्थाली स्वतन्त्रेति ।**

**भवतु व्यापारभेदो धातूपादान एव तु सः ।**

**तथाहि पचिना देवदत्तव्यापारोपादानाद् विक्लिदिना[4] धात्वनुपादानात् विक्लिद्यन्ति पचन्तीत्यर्थभेदकर्तृभेदौ ।**

काष्ठादीनि पचन्तीत्यपि प्रयुज्यते तच्चैतत्साधनानां नियोक्तृत्वं कर्तृलक्षणं न घटत इति । कस्मादित्यत आह—**नियोज्यान्तरेति** ।

काष्ठादीन्येव हि नियोज्यानि न ततो नियोज्यान्तरमस्ति । अतः प्रयोक्तृनियोज्ये काष्ठादौ नियोक्तृत्वं विवक्षितु न शक्यत इति । तस्मान्नैतत्कर्तृलक्षणं किं त्वन्यदेवेत्याह –**तस्मादिति** ।

यस्य व्यापारं प्राधान्येनाख्यातं ब्रवीति तत्स्वतन्त्रम् । काष्ठादीनि पचन्तीति काष्ठादीनां व्यापारः प्राधान्येनाभिधीयते । तस्मात्तानि स्वतन्त्राणि । अत्र वृद्धानुमतिं दर्शयति—**तथा चोक्तमिति** ।

प्रयत्न इतीह स्थालीव्यापारः कथ्यते यथा पच्यमानमोदनं बिभर्ति । स्थाल्या हि धार्यमाण ओदनो निर्वर्त्यते, नान्यथा । तदनेन वर्त्मना स्थाली ओदनपाके स्वतन्त्रेत्युच्यते । अथवा प्रयत्न इति पुरुषप्रयत्नोऽभिधीयते तस्मिन्नोदनभावनापरनाम्नि अनुग्राह्यत्वेन स्थालीस्थे विवक्ष्यमाण इत्यर्थः । न खलु विना स्थाल्या कश्चिदोदनं भावयितुं प्रभवतीति । तदेव विक्लिद्यन्ति पचन्तीति यजन्ति यजते इति तावत् कर्तृभेदादवस्थितो व्यापारभेदः । विक्लिद्यन्तीत्यत्र तण्डुलानां व्यापारः प्राधान्येनाभिधीयते, पचन्तीत्यत्र देवदत्तादीनाम् । सेयं भावनोच्यते । विक्लेदनं तु भवनमोदनस्येति । भवत्वेवं धात्वर्थ एवासावित्याह—**भवत्विति** ।

एतदेव प्रपञ्चयति—**तथा हीति** ।

१ 'नियोक्तृविवक्षाप्रयोगो' इति ख पुस्तके । २ 'स्थालीस्थायत्त्वेन कथ्यमाने' इति ख पुस्तके । ३ 'तथा च' इति ख पुस्तके । ४ 'विक्लित्तिना' इति ख पुस्तके ।

यजतिना चर्त्विग्व्यापारस्य तादर्थ्येनाभिधाना-दृत्विजां कर्तृत्वोपपत्तिः । तथा चोक्तं तदभिसन्धि-पूर्वकं प्रेषणमध्येषणं वा यत्तत्सर्वं पच्यर्थ इति ।

नैतत्सारम्—

विक्लित्तिमात्रसंकल्पविशेषैकावलम्बनौ ।
ज्ञायमानतदर्थत्वाविष्टावन्याभिधायिनौ ॥

भावाभिधायिनौ पाको याग इति विक्लित्तिमात्रं संकल्पमात्रं चाचक्षाते पचतियजती, न तद्व्यतिरिक्तौ कर्तृव्यापारौ । पाकस्य क्रिया सिद्धेर्त्यनिदर्शनात् ।

पचिः प्रयोजकस्य देवदत्तादेर्व्यापारं ब्रवीति न विक्लेदनं, विक्लिदिस्त-ण्डुलानां व्यापारं ब्रवीति न देवदत्तादेस्तत्कृतोऽर्थभेदः कर्तृभेदश्च युज्यते । तथा यजन्ति याजका इत्यत्र याजिना यागार्थं ऋत्विग्व्यापार उपादीयते । यजन्ति यागसिद्ध्यर्थमवदानादीनि कुर्वन्ति इत्यर्थः । ततो यजन्ति याजका इत्युपपन्नमृत्विजां स्वातन्त्र्यमकुर्वतामपि. तदेतदाह—यजतिनेति ।

अत्र वृद्धानुमतिं दर्शयति—तथा चोक्तमिति ।

पाकमभिसन्धाय प्रेषणमध्येषणां वा करोतीति सर्वोऽसौ पचिनाऽभिधीयते यः पक्तारं प्रेष्यत्यध्येष्यति वा सोऽपि पचतीत्युच्यते । तत्र प्रेषणाध्येषणे पच्यर्थौ भवतः । तथा च 'षड्भिर्हलैः कर्षति' इति प्रेषक एवाभिधीयत इति । एतन्निराचष्टे—नैतत्सारमिति ।

भावे घञादयो विधीयन्ते । धात्वर्थश्च केवलो भाव इत्यभिधीयत इति पाकशब्दाद्विक्लेदनं प्रतीयते न तु देवदत्तव्यापारः । तस्माद्विक्लेदनमेवा-स्यार्थः । यागशब्दाच्च संकल्पविशेषोऽवगम्यते । योऽयं देवतामुद्दिश्य पुरोडाशादेरुत्सर्गस्तदस्य संकल्पविशेष एवार्थो नावदानादय ऋत्विजां व्यापारा इति । तदेव दर्शयति—भावाभिधायिनाविति ।

कर्तृव्यापारानभिधाने कारणमाह—पाकस्येति ।

---

१ 'यथोक्तम्' इति ख पुस्तके पाठः । १ 'विक्लित्तिसंकल्पमात्रवादिनौ पचियजी' इति ख पुस्तके । २ 'स्यानित्यदर्शनात्' इति क पुस्तके ।

**तथा 'पच्यन्ते तण्डुलाः स्वयमेव' 'यजते यजमानः' इति तन्मात्रस्यैव तद्व्यापारत्वाभ्युपगमात् । तथा 'पचति देवदत्तः' 'यजन्ति याजकाः' इतिप्रज्ञायमानतदर्थस्य[1] नार्थान्तरविषयत्वं युक्तम् ।**

**अव्यभिचाराद्धि तन्मात्रमेव तदर्थो नाधिकं व्यभिचारात् शब्दान्तरनिबन्धनत्वाच्च । प्रत्ययागमे हि प्रतीयमानै[3]स्तदर्थ एव कर्तृव्यापारः ।**

घञन्तेन सिद्धवद्धात्वर्थोऽभिधीयते । तद्यदि विक्लेदनार्थकर्तृव्यापारः पचेरर्थः स्यात्तत्र पाक इत्यस्यार्थः पाकस्य क्रिया सिद्धेति व्याचक्षीरन्, न त्वेतदस्ति । तथाहि पाकः सिद्ध इति वदन्ति, न तु पाकस्य क्रिया सिद्धेति । एवं तावत्कृदन्तो व्याख्यातः । तिङन्तयोगेऽपि स एवार्थ इत्याह—**तथेति** ।

पच्यन्ते तण्डुलाः स्वयमेवेति तण्डुलानामत्र व्यापारो विक्लेदनात्मकोऽभ्युपेयते स्वयमेवेतिनिदर्शनात् । तथा 'यजते यजमानः' इति संकल्पविशेष एव यज्यर्थोऽभ्युपेयते आत्मनेपदप्रयोगात् । तावेतावुभयत्रापि सिद्धार्थविशेषौ कथं पचति देवदत्तो यजन्ति याजका इत्यत्राभिप्रायान्तरे वर्तयितुं शक्येते इत्याह—**तथा पचतीति** ।

अत्र कारणमाह—**अव्यभिचारेति** ।

सत्येव विक्लेदने कर्तृव्यापारे चासत्यपि पचिः प्रयुज्यते । तस्मादव्यभिचाराद्विक्लेदनमेव तस्यार्थो न कर्तृव्यापार इति । ननु पचतीति प्रतीयते कर्तृव्यापारः, स कथं तद्वाच्यो न स्यादित आह—**शब्दान्तरेति** ।

योऽयं पचेः परः प्रत्ययः सोऽस्याभिधायक इति । ननु पचतीति श्रुते प्रतीयते कर्तृव्यापारः, प्रत्ययस्यासावर्थो न पचेरिति कथमुन्नीयते इत्याशङ्क्याह—**प्रत्ययागमे इति** ।

१ 'स्यानयान्तर' इति क पुस्तके । २ 'दत्तन्मा' इति ख पुस्तके । ३ 'न त' इति ख पुस्तके ।

**यथोक्तम्—**

**तथा क्रमवतां नित्यम्प्रकृतिप्रत्ययांशयोः ।**

**प्रत्ययश्रुतिवेलायां भावनात्मा प्रतीयते ॥**

**प्रधानानाञ्च प्रायेण प्रत्ययार्थत्वात् प्राधान्यादपि प्रत्ययार्थत्वम् ।**

**अस्त्यादिषु व्यभिचार इति चेत् । न, वस्तुतो भावेऽपि शब्दात्तथाप्रतीतेः[1] । अन्यथाऽस्ति[2] भावः सत्त्वभेदः[3] प्रसज्यते ।**

**सत्ताया एव व्यापारात्मना प्रतीतेर्भेद इति चेत् ।**

विना प्रत्ययेन पाक इत्यत्र न प्रतीयते, प्रत्यये सति पचतीत्यत्र प्रतीयते, तथा पचतीत्यत्र प्रकृता श्रुतायां न प्रतीयते, प्रत्यये तु श्रुतेऽवगम्यते, तस्मात्तदर्थ इति । अत्र वृद्धानुमतिं दर्शयति **यथोक्तमिति** ।

अपि च पचतीत्यत्र प्राधान्येन कर्तृव्यापारोऽभिधीयते । प्रधानस्य च प्रत्ययार्थत्वं 'चैत्रस्तत' इत्यादिषु प्रसिद्धम् । तस्मात्प्रत्ययार्थो भावनेत्याह— **प्रधानानाञ्चेति** ।

पाक इत्यत्र पुरुषव्यापारव्यभिचारात्पचिना पुरुषव्यापारानभिधानमुक्तम् । यद्येव प्रत्ययेऽपि नाभिदधातीत्याह— **अस्त्यादिष्विति** ।

अस्तीति न व्यापाराविष्टे वस्तुनि प्रयुज्यते किन्तर्हि सत्ता । न च सत्ता व्यापार इति । इदम्परिहरति— **न वस्तुत इति** ।

सामान्यान्तराणि विशेषणात्वेन प्रतीयन्ते सत्ता तु द्रव्याकारेण सन् घटः, अस्ति घट इति । तत्र तिङा व्यापारिकत्वात्वित्स्वात्तयाभिधीयमाना सत्ता व्यापारात्मना प्रतीयत इति । यदि पुनरस्तीति व्यापारो नाभिधीयेत ततोऽस्ति सत्ता भाव इति प्रत्ययाभेदः स्यादित्याह— **अन्यथेति** ।

यदि भवत्यादिधात्वर्थातिरिक्तव्यापारप्रत्ययो नाभ्युपगम्येत ततो भावसत्ताशब्दसमानार्थ एवास्तिशब्दः सिद्धार्थप्रतिपादकः प्राप्नोति । पूर्वापरीभूतस्तु भवत्याद्यर्थोऽवगम्यते । सत्त्वमस्त्यादिषु साध्यात्मना प्रतीयते न व्यापारान्तरम्, सत्तादिशब्दे तु सिद्धतयेति भेद इति चोदयति— **सत्ताया इति** ।

---

१ 'शब्दात्प्रतीतेः, इति ख पुस्तके । २ 'र्थोऽस्तेभा' खे । ३ 'त्वभेदादभेदः' इति ख पुस्तके पाठः ।

**न, व्यापारान्तरसंस्पर्शकृतस्य साध्यत्वस्य पच्यादिषु निश्चयात्। इहैव तर्हि व्यभिचारो 'यजते यजमानः' 'पच्यन्ते तण्डुलाः स्वयमेव' इति। व्यापारान्तरोपगमे वा धातोरव्यभिचारः। न, अभ्युपगमात्। तिङाऽभिधानस्य तन्निबन्धनत्वात्, तस्यान्यथासिद्धेः। पाकादिषु व्यभिचारात्, भेदेनानिदर्शनादप्रतीतेः,**

तत्र परिहारमाह—**न व्यापारान्तरेति**।

व्यापारान्तरसंस्पर्शकृत धात्वर्थसाध्यत्वमुक्तम्—

"कः पाकः पचतीत्यत्र बुद्धिभेदमपन्हुते।"

इत्यत्र। तेनात्रापि व्यापारान्तरसंस्पर्शकृतमेव साध्यत्वं न सत्तायाः स्वाभाविकमिति। यद्यस्त्यादिषु कथञ्चिद्व्यभिचारः परिहृतः, इह तर्हि दुष्परिहरो व्यभिचार इति चोदयति—**इहैवेति**।

अत्र परिहारमाह—**नेति**।

अत्र व्यापारान्तरमस्माभिरभ्युपगतमेव। तत्र हेतुमाह—**तिङेति**।

लकारेणाभिधानस्य व्यापारान्तरानिबन्धनत्वात्। अतो नास्ति प्रत्ययव्यभिचारः। यत्तु धातुव्यभिचारं पूर्वमुदाहृतं तत्पराभिप्रायेण। परेणात्र व्यापारान्तरं नाङ्गीकृतम्। वस्तुतोऽत्रापि पुरुषव्यापारस्तण्डुलं चोदने वा आरोप्यते तं प्रत्यानुगुण्यात्। यो हि यदनुगुणस्स तत्करोतीत्युच्यते। पच्यत इति च पाकः साध्यत्वेनावगम्यते। साध्यत्वञ्च व्यापारान्तरसंस्पर्शनिबन्धनम्। न च तण्डुलानां विक्लेदनादोदनस्य च भवनाद्व्यापारान्तरमस्ति, यत्कृतं पाकस्य साध्यत्वं स्यात्। अतः पक्तृव्यापार एव तत्रारोपितस्तिङाऽभिधीयत इति। कथं तर्हि वस्तुतो धातावव्यभिचारिण्यधात्वर्थत्वम्भावनाया इत्याशङ्क्याह—**तस्येति**।

अस्य धातुव्यभिचारस्यान्यथासिद्धेरभ्युपगतमस्माभिरत्र व्यापारान्तरम्। कथमन्यथासिद्धिरित्यपेक्षिते सत्याह उदाहरणान्तरम्—**पाकेति**।

१ 'पचादौ' इति ख पुस्तके पाठः। २ 'व्यापारोपगमे' इति ख पुस्तके पाठः।
३ 'गमात् न व्यभिचारः' इति ख पुस्तके। ४ 'तस्यासिद्धेः' इति ख पुस्तके।
५ 'दतः प्रतीतेः' इति ख पुस्तके पाठः।

**इतरत्राख्याते भेदेन निष्कर्षणात्। अन्यथा तुल्यत्वा-दनिष्कर्षणं स्यात्। सामान्यविशेषयोश्च साध्यसाध-**

नैव 'यजते यजमानः' 'पच्यन्ते तण्डुलाः स्वयमेव' इत्येतदेव धातुव्यभि-चारोदाहरणं, येन वस्तुत एव तस्मिन्नुदाहरणे धातावव्यभिचारिणि सर्व्वत्र धातोरव्यभिचारादिति। नैव यजते यजमानः पच्यन्ते तण्डुलाः स्यात्, पाका दिषु व्यभिचारस्य विद्यमानत्वादिति। कथम्पाकादिषु व्यभिचार इत्यपेक्षिते सत्याह—**भेदेनेति**।

पाकस्य क्रिया सिद्धेति न पाकादिधात्वर्थभेदेन करोत्यर्थं निदर्शयति। नापि निष्कर्षेण प्रतीयते। यदि व्यापारान्तरं स्यात् ततः पचत्यादिशब्दतुल्य-त्वात्प्रतीतिर्निदर्शने स्यानाम्। 'नानभ्युपगमात्' इति क्वचित्पाठः। तत्रायमर्थः- न प्रत्ययस्य व्यभिचारो नापि धातोरव्यभिचार इति प्रतिज्ञातम्। तत्रोत्तर-प्रतिज्ञाया तावत्कारणमाह-अनभ्युपगमादिति। व्यापारान्तरस्यात्र भवताऽ-नभ्युपगमाद्भवति भवदभिप्रायेण धातुव्यभिचारोदाहरणमेतत्। सर्वत्र व्या-पारान्तरं निन्हुवानेन भवता यत्रास्माभिर्व्यापारान्तरमापादितं विक्लिद्यन्ति पचन्तीत्यनेन तत्रैवाङ्गीकृतो व्यापारभेदः। अस्माभिश्च यजति पचतीत्यत्र व्यापारान्तरमापादितम्। तेन विना देवदत्तादीनामृत्विजाञ्च कर्तृत्वानुपप-त्तेः न तु यजते यजमानः' पच्यन्ते तण्डुलाः स्वयमेव' इत्यत्र। यागपाकमात्रेण अभिहितव्यापारत्वाद् यजमानतण्डुलानाम्। निडाभिधानस्येति। अत्र हेतुः तन्निबन्धनत्वादिति। व्यापारान्तरनिबन्धनत्वादित्यर्थः। अतन्निबन्धनत्वा-दिति क्वचित्पाठः। अत्राप्ययमर्थ —अधात्वर्थनिबन्धनत्वात्, व्यापारान्तर-निबन्धनत्वादिति यावत्। अत्रैव कारणमाह-तस्यान्यथासिद्धेरिति। उपरि-तनस्तु ग्रन्थो व्याख्यात एव। "यजते यजमानः" "पच्यन्ते तण्डुलाः स्वयमेव" इत्यत्र यागं करोति पाकं कुर्वन्ति इति धात्वर्थनिष्कर्षेण प्रतीतिर्न धात्वर्थसामान्यनिबन्धना, येनात्र प्रत्ययव्यभिचारः स्यादित्याह — **सामान्येति**।

१ 'यो: साध्यस्य साधनत्वायोगात्' इति ख पुस्तके पाठः।

**नभावायोगात्, सामान्यस्यासाध्यत्वात् अनभिधेयाख्यानानुपपत्तेश्च ।**

न व्यभिचार इत्यत्र प्रतिज्ञातार्थेन व्यापारान्तरनिबन्धनबलेनाभिधानमित्याशङ्कानिराकरणमुखेन हेतुत्रयमुपन्यस्तमिति द्रष्टव्यम् । कथमयोग इत्यपेक्षिते सत्याह—**सामान्यस्येति** ।

धात्वर्थसामान्यस्य साध्यरूपत्वात्तदभिप्रायेण याग करोतीति साध्यसाधनप्रत्ययो न घटते । यदि च 'यजते' इत्यत्र व्यापारान्तरप्रत्ययो नाभ्युपगम्येत ततो याग करोतीति निदर्शनवाक्येनानभिहित एवार्थः समाख्यातः स्यादित्याह—**अनभिधेयेति** ।

अत्र चोदयन्ति-यदिद धातुव्यभिचारार्थमुपन्यस्तं पाको याग इति विक्लित्तिमात्र संकल्पमात्र चाचष्टे पचतियजती,' यच्च प्रत्ययाव्यभिचारसिद्धयर्थ 'वस्तुतो भावेपि शब्दात्प्रतीतेः' इत्युक्त, तदुभयमप्ययुक्तम् । यदि पाक इत्यत्र पाकारादिः ककारान्तः शब्दो व्यापारान्तर व्यभिचरति, पचतीत्यत्र पचित्यस्य शब्दान्तरस्य किमायातम् ? न ह्यनन्यवद्वत्तनीत्यनेन न्यायेनोभयत्रैक शब्दः स्यात् पूर्वावयवविनाशेऽवयवान्तरोपजन इव देवदत्तः ।

यतः—

विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यै. सर्वगतैरपि ।
व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते ॥

इत्यनेनास्य निराकृतत्वात् । अतोऽन्यत्वमेव प्रतीमः । अन्यच्चोक्तम्—

पदावधारणोपायान्बहूनिच्छन्ति सूरयः ।
क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृती ॥

यत्र स्वरभेदेन भवतिभवतिशब्दयोर्भवति भेदस्तत्रानयोर्वर्णभेदेऽपि न भेद इति दुःप्रतिपादमेतत् । न चैत्र वक्तव्य पचतिशब्दवत्पाकशब्देपि 'पच्' इतीयमेव प्रकृतिः, चकारस्य तु ककारादेशो भवति पशब्दस्य च दीर्घत्वं कृतम्, अतः स एवाय शब्द इति । पकारादेश्चकारान्तस्य शब्द-

---

१ 'भिधानाख्या' इति ख पुस्तके पाठः ।

THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

EDITED BY

GANGĀNĀTHA JHĀ

AND

GOPINATHA KAVIRĀJ

---

No. 6.

---

THE

# BHĀVANĀ VIVEKA

---

BENARES:

Printed by Rameshwar Pathak, at the Tara Printing Works

---

1923

मण्डनमिश्रविरचितः

# भावना विवेकः

(सटीकः)

THE

# BHĀVANĀ VIVEKA

OF

## MANDANA MISRA

WITH

THE COMMENTARY

OF

## BHATTA UMBEKA

EDITED WITH INTRODUCTION

BY

MAHĀMAHOPĀDHYĀYA GANGĀNĀTHA JHĀ

M. A., D. Litt.,

*Principal Government Sanskrit College, Benares*

---

Printed by Rameshwar Pathak, at the Tara Printing Works,

Benares.

&

Published under the authority of the Government of the United

Provinces by the Superintendent of the Government Press,

Allahabad.

---

# INTRODUCTION

Mandana, better known as Mandana Miśra, has been identified with Sureśvara or Sureśvarāchārya, the author of a series of Vārtikas on the Bhāṣyas of Śankarāchārya on the Upaniṣads—the Bṛhadāraṇyaka and the Taittirīya,—and also of a few independent Vedānta-treatises, such as the *Naiṣkarmyasiddhi* and the *Brahmasiddhi*. This identification is based on very old tradition, and there are no reasons for disputing its historical foundation. The story of Mandana's controversy with Śankara at Māhiṣmatī is well known, and the general belief is that at the time the former was fairly advanced in age, while the latter was only a youth Śankara got the better of Mandana in this controversy, and thereupon the latter became his disciple, and renouncing his Mīmāṃsā predilections, wrote a series of works on Vedānta (Vide Sankaradigvijaya).

Of his works on Mīmāṃsā, we know of the following:—(1) *Vidhiviveka* (which has been published at Benares, along with the commentary by the great Vāchaspati, called the Nyāyakaṇikā),—(2) *Bhāvanāviveka*, now published with a commentary,—(3) *Vibhramaviveka* (referred to in the *Nyāyakandalī*), (4) Sphoṭasiddhi (referred to in the Nyāyakandali, p 270) and (5) *Mīmāṃsānukramaṇikā* Of his Vedānta works the following are well known:—(1) The "*Vārtika*" on Śankara's Bhāṣya on the Bṛhadāraṇyaka Upaniṣad (Ānandāśrama Sanskrit Series),—(2) *Vārtika* on Śankara's Bhāṣya on the Taittirīya Upaniṣad (Ānandāśrama S. Series),—(3) *Brahmasiddhi* (on which Vāchaspati Miśra wrote a commentary referred to by himself as the 'Brahmatattva samīkṣā'),—(4) *Naiṣkarmyasiddhi* (Bombay Sans Series).

Maṇḍana's exact position in the galaxy of *Mīmāṃsakas*

is not easy to determine. Tradition makes him a pupil of Kumārila But this view is not supported by the internal evidence of Mandana's own works; which would serve to indicate this much at any rate that he had not much regard for the opinions set forth by Kumārila in his Vārtika, as against those of Śabara. For instance under the two *Smṛty-adhikaraṇas* Mīmāṃsā Su I. 3 3 and 4) Śabara has expressly stated that no authority attaches to (1) those Smṛtis that go against express Śruti texts. [This view is rejected by Kumārila]./ Or to (2) those that are clearly found to have been prompted by greed and such motives. To this view Kumārila has demurred and demurred strongly. We need not enter into the details of this discussion; for our present purpose it is sufficient to point out that Mandana takes no notice of Kumārila's view on this matter; on which he mentions only Śabara's view—

श्रुत्या विरुद्धा स्मृतिरप्रमाणम्

(Mīmāṃsānukramaṇikā)

In this connection, it is interesting also to note that Kumārila is not found to be referred to by name, though we know that Mandana refers to Śaṅkara's assertion as '*bhagavatpādīyam udāharaṇam*' (Naiṣkarmyasiddhi, p. 195). If his relations with Kumārila were at allanalogous to those with Śaṅkara, he would have spoken of the former also in the same respectful manner

*The Commentary.*

The personality of the writer of the commentary here published is still more mysterious. The name itself is found to be written variously-- *Umbeka*, *Ombeka*, *Aumbeka*, *Umbaka* and so forth He is said to have written a commentary on Kumārila's Ślokavārtika from which a quotation bearing upon his interpretation of the kārikā सम्बन्धो व्याप्ति &c (Ślo. Vā Anumāna 4) is made by Pratyaksvarūpa Bhagavān in his

commentary on the *Chitsukhī.* Chitsukha himself mentions Umbeka by name and quotes him (Nirnayasāgara Edn., p. 265, of the Tattvapradipikā).—This same commentary is quoted from by Ānandapūrna (in his *Vidyāsāgarī* commentary on the Khandanakhanda khādya—Bodhaghana refers to Umbeka in his *Tattva-śuddhi*—In the *Sad-darśanasamuchchaya—vritti*, Gunaratna speaks of Umbeka as well-versed in the 'kārikās'—

उम्बेकः कारिकां वेत्ति तन्त्रं वेत्ति प्रभाकरः ।

Mr. M. R. Telang is inclined to think that the 'kārikā' meant here is the *Ślokavārtika.* Are we justified, in the same manner to take 'tantra' as standing for the *Śabara-bhāṣya?* We know that Prabhākara, in his *Bṛhatī*, has never deviated from the Bhāṣya

The mystery regarding the personality of this writer *Umbeka* begins to thicken, when we find him being identified, on the one hand with the dramatist Bhavabhuti, and, on the other, with *Sureśvara* (Mandana himself).

In the Śankara digvijaya (7 116) we have the plain statement that 'Umbeka' was the popular name of Mandana This is what it says regarding Mandana

उम्बेक इत्यभिहितस्य हि तस्य लोकै-
रुम्बेति बान्धवजनैरभिधीयमानः ।

If there is any truth in this identification, then the commentary here published is by the author of the original (Bhāvanāviveka itself) We know from the Naiskarmyasiddhi that Sureśvara used to add his own commentary to his kārikās But this condition is fulfilled by the Bhāvana viveka itself, and the writing of a separate commentary upon both the metrical and prose portions of the original by the author himself would appear to be a departure from the ordinary ways of the writer.

The identification of Umbeka with the dramatist Bhavabhūti appears to stand upon a somewhat steadier footing.

Pratyak Svarūpa Bhagavān says plainly that *Umbeka* was another name of the poet Bhavabhūti Speaking of the author of Mālatīmādhava, Chit sukha himself says: न हि पुराप्त एव सन्नाटकनाटिकादिप्रबन्धविरचनमात्रेणानाप्तो भवति भवभूतिः। उक्तं चैतदुम्बेकेन—"यदाप्तोऽपि कस्मैचिदुपदिशति न त्वयाननुभूतार्थविषयं वाक्यं प्रयोक्तव्यं यथाऽङ्गुल्यग्र हस्तियूथशतमास्ते।" Here the commentator adds: भवभूतिरुम्बेक। That the dramatist Bhavabhūti is meant here is evident

There is another interesting point. In a Ms about 500 years old, of the drama of Mālatīmādhava secured by Mr S. P. Pandit from a gentleman of Indore, the work is attributed to Umbeka Āchārya, pupil of Kumārila Svāmin in the colophon of the 6th act, to the pupil of Bhatta Kumārila in the colophon of the 3rd act, and to Bhavabhuti in the colophon of the 10th act. [For details see Introduction to Gauda Vaho, pp. ccv—ccviii]. Mr Pandit has tried to show, with quotations from the works that the personal statements of Bhavabhūti in the drama are not inconsistent with the fact that he was a pupil of Kumārila.

If the identity proposed be accepted the history of Mandana's life may be easily reconstructed both as a lay man in the royal court, as a Mīmāmsaka on the Nerbada and ultimately as a Sannyāsin (in the Śingerī Matha) He was also very deeply read in the Śaiva and Śākta Āgamas and we still have works attributed to him bearing on the Tantric literature.

So far as the recorded statements are concerned the identity proposed will not be inconsistent with any of them. Nor will there be any anachronism, because Bhavabhūti, if the

Rājataraṅgiṇī is to be relied upon, was a contemporary of Lalitāditya of Kashmir and of Yaśovarmā of Kanouj.

*The present Edition.*

The two manuscripts (called here 'क' and 'ख') upon which the present edition is based have been already described in the prefatory note to the first part. The second part (now published) has had the further advantage of collation with an independent Ms of the text (called here 'ग') kindly supplied to us by M R Ry. Pandit Kūppu Swamy Shastri of the Oriental Mss Library, Madras The var lec. for the earlier part have been noted here in a supplementary page at the end.

GANGĀ NĀTHA JHĀ.

स्याप्रयुज्यमानत्वात् । प्रयुज्यमानस्य हि व्यभिचारो भवति नाप्रयुज्यमानस्य । यत्तु व्याकरणस्मरणं तदविद्यमानाध्यारोपेण संक्षेपतः शब्दानुशासनार्थमखण्डप्रयुक्तैकैकशब्दकथनमानन्त्यादशक्यमिति कृत्वा । अतो न विद्मः कथमपप्रयोगो भावनेति । अस्त्यादिषु चासद्व्यापाराभिधानाभ्युपगमे प्रत्ययस्यार्थासंस्पर्शित्वप्रसङ्गः । इदमेव च शब्दानामर्थासंस्पर्शित्वं यदविद्यमानार्थप्रतिपादकत्वम् । ननु युधिष्ठिरादिशब्दा अविद्यमानमप्यर्थं प्रतिपादयन्तो नार्थासंस्पर्शिन इत्युच्यन्ते । नैष दोषः । न ते वर्तमानतया युधिष्ठिराद्यर्थं प्रतिपादयन्ति अपि तु कालत्रयासंसृष्टम् । तेन वस्तुतो भूतविषयत्वान्नार्थासंस्पर्शिता । प्रत्ययस्त्वस्त्यादिषु वर्तमानं व्यापारमाचष्टे । अस्ति देवदत्तो, भवति घट इति । न चासौ वर्तते धात्वर्थव्यतिरिक्तस्य तस्याभावात् । अतोऽर्थासंस्पर्शिता । तथा सति पचत्यादावपि प्रत्ययप्रयोगेन व्यापारान्तरं प्रति समाश्वासः स्यात् । एवं सति 'उखायामोदनं काष्ठैर्देवदत्तः पचेत्' इत्युक्तं सन्दिह्यमानप्रत्ययार्थमिश्रत्वात्सन्दिग्ध एव वाक्यार्थः प्राप्नोति । प्रमाणान्तरेण तदवगमे निश्चय इति चेत् प्रमाणान्तरतस्तर्हि निश्चयो न शब्दादित्यर्थासंस्पर्शितैव प्रत्ययस्य । तस्मादेवं वर्णयितव्यं-यदि धात्वर्थो भावना स्यात् ततः पाकादावपि धातोर्विद्यमानत्वात् तत्प्रतीतिः स्यात् । न चासावस्ति यद्यपि ककारान्तस्यापि पचेः पाठो नास्ति तथापि सौत्रधातुवत्कथंचित्प्रक्रियया धातुशब्दप्रयोगाद्धातुव्यपदेशः । यत्तु पचिर्यजिरित्युक्तं तत् ककारगकारान्तशब्दोपलक्षणार्थं व्याकरणप्रक्रिययैव निर्देशः कृतः ज्ञायमानतदर्थस्येति । यद्यपि शब्दान्तरं तथापि तुल्यार्थत्वाद्व्याकरणस्य प्रकृतौ च कथंचिदेकत्वदर्शनादेकत्वोपचार इतीयती गतिः । न च पचत्यादावर्थे प्रत्ययस्यार्थासंस्पर्शित्वं वाच्यम् । प्रमाणान्तरदृष्टपाकादिविषयकरोत्यर्थसम्बन्धित्वेन सर्वत्र निश्चयकरणात् । तेन यत्र निश्चितोऽर्थो न विसंवदति न तत्रार्थासंस्पर्शिता । न तावता प्रत्ययव्यभिचारः । धात्वर्थव्यतिरिक्तस्यार्थान्तरस्य प्रतीयमानत्वात् । अस्त्येव वाच्यसंबन्ध इत्यन्यत्रापीयती गतिः ।

वयं तु ब्रूमः सत्यप्यस्त्यादौ प्रत्ययव्यभिचारे यत्र पचत्यादौ पारमार्थिकी भावना प्रतीयते तत्रासौ प्रत्ययार्थः । प्रत्ययोच्चारणे सति प्रतीयमानत्वात् । ननु धातूच्चारणमप्यत्रास्ति अतो धात्वर्थ एव कस्मान्न भवति । न धात्व

पचेर्धातोर्व्यभिचारः क्वचिद् दृष्टः। प्रत्ययस्त्वस्त्यादिषु शब्देषु व्यभिचारी। यदि तु पच्यादिधातुसन्निधानाविर्भावितशक्तिः प्रत्ययो भावनां वदतीत्युच्यते, तताऽव्यभिचारिणो धातोः सुतरां भावनार्थत्वम्। अपि च पचतिपाकशब्दयोर्धात्वेकत्वेऽसत्यपि पचनयजनशब्दयोर्धातुव्यभिचारे स एव शब्दः प्रतीयत इति शक्यमिदं वक्तुमाख्यातप्रत्ययसान्निधानाविर्भावितशक्तिः पचत्यादिधातुर्भावना वक्तीति। यथा विशिष्टधातुसान्निधानाविर्भूतशक्तिर्लिङ् प्रेषणमध्येषणं वा ब्रूते कुर्यादिच्छेदित्येवमादौ प्रयोगे। तथाख्यातप्रत्ययसमभिव्याहृतस्य पचेर्भावनार्थत्वमिति दुर्वचं प्रत्ययार्थत्वम्। अत्रोच्यते—नात्र धातुप्रत्ययौ युगपदुच्चार्य्येते। किं तर्हि? प्रथमं धातुः पश्चात्प्रत्ययः। प्रत्ययागमे च भावनां प्रतीमः। तेन द्वितीयाद्यन्तशब्दप्रयोगगतकर्मत्वादिवत्तदागमन्यायेन प्रत्ययार्थ एव भावना। यथा 'पाचकः' इत्यत्र धात्वागमे प्रतीयमानो धात्वर्थ एव पाकः प्रत्ययागमे चावगम्यमानः प्रत्ययार्थः कर्त्ता। तदुक्तम्—

प्रत्ययश्रुतिवेलाया भावनात्मावगम्यते।

तथा—

पाकं हि पचिरेवाह कर्त्तारं प्रत्ययोऽप्यकः। इति।

तेन यद्धातुसमभिव्याहृतात्प्रत्ययाद्भावनाप्रतीतिस्तद्धातुसन्निधानाविर्भूतशक्तिरस्त्यादिषु दृष्टव्यभिचारोऽपि प्रत्यय एव भावनार्थो नाव्यभिचार्य्यपि धातुः तच्छ्रवणवेलायामप्रतीयमानत्वात्। औपगवादिषु च प्रत्ययार्थत्वमपत्याद्यर्थस्य तवोक्तम्। इतश्च यागादिर्व्यतिरिक्ता भावना न स्यात्ततः स्वं यज्ञं यजाति यजेताश्वमेधेन यजेत बहुभिर्यज्ञैरित्यत्र प्रयोगे स्वयज्ञाश्वमेधबहुयज्ञानां कर्मकरणभावो न स्यात्। आख्यातप्रतिपाद्ययागव्यतिरिक्तक्रियाऽभावात्। न हि आत्मन एवात्मनि कर्मत्वं करणत्वं चोपपद्यते। तस्मादस्ति यागव्यतिरिक्ता भावना यजेतेत्येवमाद्याख्यातप्रतिपाद्या। तत्राश्वमेधादेः कर्मत्वं करणत्वं वा। तथापि व्यतिरिक्तापि यदि धातुनाच्येत ततः 'स्वं यज्ञं यजाति' इति 'यजेत बहुभिर्यज्ञैः' इति च कर्मकरणनिर्देशो न स्यात्। कुतः यज्ञं यज्ञैरित्यत्रापि त्वत्पक्षे प्रकृतिभूतेन धातुना भावनोपादानात्। न च भावनाया एव भावनायां कर्मत्वं करणत्वं च घटते। उभयोरपि क्रियात्वेन तुल्य-

(१किञ्च—

**तदेव तस्य करणं न चैकमवकल्पते।**
**भावनां संगिरन्तेऽतो धात्वर्थव्यतिरेकिणीम् ॥)**

रूपत्वात्। कारकं हि क्रियायाः करणं कर्म वा भवति न क्रियैव। न चाख्यातप्रत्ययसमभिव्याहृतो धातुर्भावना वदतीति वाच्यम्। आख्याता-पेक्षायां तदागमन्यायेन प्रत्ययार्थत्वप्रसङ्गात्। तेन यज्ञ यज्ञैरित्यत्र यागमा-त्रमाख्यातोपात्तभावनाया कर्म करणं च वक्तव्यम्। तच्चैवं भवति यदि न धात्वर्थो भावना। धात्वर्थत्वे च सति स्व यज्ञ बहुभिर्यज्ञैरित्यत्रापि स्वयज्ञ-बहुयज्ञानुबन्धकृतभावनाविशेषस्य धातुनोपादानाद्विशेषणविशेष्यभावे सति कारकविभक्तिर्न स्यात्। ननु भूयाभिप्रायिनि धातावंशस्य यागात्मकस्य करणत्वात्कारकविभक्तिः कस्मान्न भवति। नैतत्सारम्। प्रातिपदिकार्थ-विशिष्टे कारके विभक्तिस्मरणात्। इह च प्रातिपदिकार्थो न यागमात्र-मिति दुष्करां निष्कर्षोऽस्मादशाद्विभक्तिर्नास्मादिति। भावनाविशेषणत्वं च करणस्यापि यागस्यास्तीति युक्तो विशेषणविशेष्यसम्बन्धः। धात्वर्थ-व्यतिरेकिणीमित्यनेन धात्वर्थभ्यो व्यतिरेको धात्वनभिधेयत्वं च भावनायाः प्रतिपादितं यदि धातुनोच्यंत ततो यागादिव्यतिरिक्तापि सती धात्वर्थत्वान्न धात्वर्थव्यतिरेकिणी स्यात् तेन प्रसिद्धयागादिधात्वर्थव्यतिरिक्तत्वमधातु-वाच्यत्व च प्रतिपादितम्। तदेव तस्य करणमित्यनेन च व्यतिरेके धात्वभिधेयत्वे च कारणमुक्तम्। यदि धात्वभिधेया स्यात् भावनाऽऽख्या तपदे ततो यज्ञपदेऽपि भावनाया धात्वभिधेयत्वाद्भावना भावनायाः करण कर्म चेत्यभ्युपगत स्यात् न चैतद्युक्तम्। न हि तदेव कर्म करण वा भवति। यद्यपि च सामान्यविशेषयोर्भेदोऽस्ति सामान्यस्य विशेषात्म-कत्वात् तथापि भावनासामान्याभिप्रायेण तदेवेति व्यपदेशः। अव्यतिरेके च यागनामधेयाश्वमेधशब्दप्रतिपाद्यो याग एव यजेतत्याख्यातप्रतिपाद्ये यागे करणमित्यङ्गीकृतं स्यात्। न चैतद्युक्तम्। न हि तदेव तस्य कर्म करणं च संभवति। अत्रापि पक्षे सामान्याभिप्रायेण तदेवेति व्यपदेशः। तेनोभय-मप्यनेन श्लोकेन प्रतिपाद्यत इति व्याख्येयम्। अत एव च।

---

१ कसान्तर्गतो ग्रन्थः कपुस्तके नास्ति।

**यजेताश्वमेधेनेष्टवान्बहुभिर्यज्ञैः स्वं यज्ञं यजतीति चैकत्वे क्रियाकारकभावानुपपत्तिः ।**

**सामान्यविशेषभेदोऽपि न क्रियाकारकसम्बन्धमुपकल्पयितुं क्षमः । सामान्यस्यासाध्यत्वेनाक्रियात्मकत्वात् ।**

**विशेषणविशेष्यसम्बन्धे तु कारकविभक्तेर्विरोधात्**

**नाप्येकदेशयोः क्रियाकारकभावः ।**

**उभयत्र समुदायस्य शब्दोपात्तत्वात्[1] ।**

**नापि धातूपात्तायां[2] भावनायामन्तर्भूतसामान्यकर्मकरणिकायां विशेषकर्मकरणसम्बन्धो यथा मुण्डयति माणवकमुपश्लोकयति मालिन्या इति ।**

विक्लित्तिमात्रसंकल्पविशेषैकावलम्बनो ।

इत्यस्यानन्तरमस्य निवेशः कृतः। यदि तु व्यतिरेकमात्रं प्रतिपादयेत्ततो विक्लिद्यन्ति पचन्तीत्येतदनन्तरं निवेश्येत । तत्र तावद्यागादिव्यतिरेकं भावनायाः प्रपञ्चयति—**यजेतेति** ।

ननु चाश्वमेधशब्दोपात्तो यागविशेषः करणं भविष्यति यजेतेत्याख्यातोपात्त च यागसामान्यं क्रियेत्याशङ्क्याह—**सामान्येति** ।

यदि तूच्यता-अस्तु तर्हि विशेषणविशेष्यलक्षण एव सम्बन्ध इति, तदप्ययुक्तम् । अश्वमेधेनेति यज्ञमिति च कारकविभक्त्यभावप्रसङ्गादित्याह—**विशेषणेति** ।

अयुक्तोऽयं पक्ष इति वाक्यं समापनीयम् । विरोध इति प्रथमान्तः क्वचित्पाठः स साधुरेव । एवं तर्ह्यश्वमेधेनेत्यत्र यागैकदेशः करणं भविष्यति यजेतेत्यत्र यागैकदेशः क्रियेति नास्त्येकत्वमित्याशङ्क्याह—**नाप्येकेति** ।

कस्मादित्याह—**उभयत्रेति** ।

क्रियापदे कारकपदे च समस्तस्य यागस्य शब्देनोपात्तत्वान्नायं विभागः कर्तुं शक्यते इत्यर्थः । एवं व्यतिरेकं प्रतिपाद्येदानीं श्लोकोपात्तमधात्वर्थत्वं भावनाया विवृणोति—**नापीति** ।

---

१ 'शब्दोपादानत्वात्' इति खपुस्तके पाठः । २ 'धातूपादानायाम्' इति खपुस्तके ।

**एवं यज्ञं बहुभिर्यज्ञैरित्यत्रापि धातुना भावनोपादानाद्विशेषभावनाभ्युपगमाद्विशेषणविशेष्यसम्बन्धप्रसङ्गात्। अनुपादाने वा सिद्धव्यभिचारोऽसौ न तिङन्तेऽपि तामुपादातुमर्हति।**

**एतेनौदनपाकं पचतीत्यादयोऽपि व्याख्याताः।**

**तस्मादत्रैष कारकभावो नाम पदोपात्तधात्वर्थस्य विभक्तिभिर्व्यज्यते, तदतिरेकी तिङन्तेषु प्रत्ययोपादानः करोत्यर्थः प्रतिज्ञायते वृद्धैः।**

यस्य 'पचतीत्याख्यातवर्तिना धातुना भावनोच्यते' इति सिद्धान्तः तेनेदं वक्तव्यम्—अन्तर्भूतसामान्यकर्मकरणिकाया भावनायामाख्यातधातूपात्तायां विशेषकर्मकरणनिर्देशः—एव यज्ञं बहुभिर्यज्ञैरिति। यथा मुण्डयति मुण्डङ्करोतीति सामान्यकर्मिकाया भावनायामुपात्ताया माणवकमिति विशिष्टकर्मनिर्देशः तथोपश्लोकयतीति श्लोकेन स्तुतिङ्करोति इति श्लोकमात्रकरणिकायां भावनायामुपात्तायां मालिन्येति करणनिर्देशः, एव एव यज्ञमिति कर्मनिर्देशः बहुभिर्यज्ञैरिति करणनिर्देश इति एतच्चायुक्तमित्यर्थः। कस्मादित्याह—**एवं यज्ञमिति।**

युक्त तत्र मुण्डशब्देन श्लोकशब्देन च सामान्यतोऽभिहिते कर्मकरणे पश्चात्तद्युक्ता क्रिया तिङोच्यते इति विशेषणविशेष्यभावः। इह तु भावनैव धात्वर्थो न कर्मकरणसामान्यम्। न चानुपात्ते विशेष्ये विशेषणं भवति। धातुसामानाधिकरण्येन ह्यश्वमेधादिशब्दाना धात्वर्थनामधेयत्वं वक्ष्यते। तद्यदि भावनैव धात्वर्थस्तदा तस्याः तन्नामधेयं स्यात्। ननु तत्करणस्य धातुनाभिहितस्य तस्मान्नैतन्मुण्डयतीत्यादिना तुल्यमिति। अनेन च न्यायेनौदनपाकं पचतीत्येवमादिष्वपि प्रयोगेषु पाकादिधात्वर्थेभ्यो व्यतिरेको भावनाया अधातुवाच्यत्वं चेत्याह—**एतेनेति।**

पूर्वोक्तमेवार्थमुपसंहरति—**तस्मादिति।**

---

१ 'रित्यपि' इति खपुस्तके।

२ 'यस्माद्' इति खपुस्तके। ३ 'पदोपात्तस्य' इति खपुस्तके।

कारकमात्र इत्यत्रात्वर्थस्य व्यतिरेकीति च व्यतिरेकमुपसंहरति । 'स्त्रं यज्ञमश्वमेधेन' इत्यत्र यज्ञाश्वमेधनामपदोपात्तस्य धात्वर्थस्याख्यातप्रत्ययोपात्तायां भावनायां द्वितीयातृतीयाभ्यां कर्मत्वं करणत्वं च व्यज्यते आख्यातादेव धात्वर्थस्य करणत्वमवधारितं कर्मत्वं च । अन्यथा भावनान्वयानुपपत्तेरतोऽभिव्यज्यते इत्याह। यत एव धात्वर्थस्य कारकत्वं व्यज्यते अत एव धात्वर्थातिरेकी भावो धात्वर्थान्तर्भावे तु धात्वर्थस्य कारकत्वाभिव्यक्तिर्न प्राप्नोत्यकारकस्यापि भावस्य धातुनोपात्तत्वादिति । अत्र चोद्यते । यजेताश्वमेधेन इति योऽश्वमेधस्य करणभावः स यागव्यतिरिक्तायामसत्यामपि भावनायां घटत एव । तथाहि, लिङ्प्रत्ययोपात्ते नियोगेऽश्वमेधस्य करणभावः, स च नियोगोऽश्वमेधाद्व्यतिरिक्त एव । अतोऽन्यत्राश्वमेधादेः करणत्वोपपत्तेर्न करणत्वान्यथानुपपत्त्या यागव्यतिरिक्तभावनासिद्धिरिति । तदेतदपेशलम् । स नियोगः क्रियारूपो वा स्यादक्रियारूपो वा ? । यदि क्रियारूपस्तदाप्यात्मक्रिया वा स्याल्लिङादिशब्दक्रिया वा ? । तत्रात्मक्रियाभ्युपगमेऽर्थभावनैव नियोगशब्देनोक्ता स्यात्। पुरुषप्रयत्नो ह्यात्मकर्तृका भावना नान्यत् किंचित्। कथं चानियोजकात्मव्यापारो नियोग इत्युच्यते। यो नियुङ्क्ते तदीयो व्यापारो नियोगः। न च यजेतेत्यत्रात्मानं नियोजकत्वेन प्रतीमः । किं तर्हि ? लिङ्नियोज्य आत्मा । कथमिव तस्य नियोक्तृत्वं भवेत् । न हि यो यत्र नियुज्यते स एव तत्र नियोक्तेति शक्यं वक्तुम् । तेन लिङादिशब्दव्यापार एवायं नियोग इति वक्तव्यम् । न च तत्राश्वमेधस्य करणभावः संभवति पूर्वानुभवसापेक्षविधिज्ञानकरणत्वात् । यथोक्तम्-पूर्वसंबन्धानुभवसापेक्षं विधिज्ञानं करणमिति। शब्दभावनैवास्मिन्पक्षे नियोगशब्देन उक्ता स्यात् । तस्यां चार्थभावनाकरणस्याश्वमेधादेः करणत्वं दुःप्रतिपादम् । न ह्यश्वमेधेन लिङ् प्रवर्तयति इति संबन्धो घटते । यथा यागेन स्वर्गं देवदत्तो भावयतीति । अश्वमेधानुष्ठानाप्राक्तनं प्रवर्तकत्वसिद्धेः । अपि च पुरुषव्यापारकार्यो नियोग इत्यभ्युपगम्यते । न च शब्दव्यापारः पुरुषकार्यः शब्दकार्यत्वात्तस्य । लिङादिरुच्चार्यमाणः स्वव्यापारं प्रेरणाख्यं निर्वर्तयति, निर्वृत्ते चास्मिन्पश्चादनुष्ठानम् । तथा हि प्रेरितोऽस्मि नियुक्तोस्मीति मन्वानः प्रवर्तते । न चासिद्धे नियोगे नियुक्तोस्मीति ज्ञानं घटते ज्ञानरूपानुरूपत्वादालम्बनस्य । तेन प्रागेवानुष्ठानाच्छब्दव्या-

पारात्मकनियोगासिद्धेर्न यागेनाश्वमेधादिनानुष्ठानान्नियोगं सपादयतीति शक्यं वक्तुम्। तेन लिङादिशब्दव्यापारे नियोगेऽभ्युपगम्यमाने पुरुषकार्यत्वं विरुद्ध्यत इति दर्शनहानिः। धातूपात्तव्यापार· परिस्पन्दो नियोग इति न शक्यं वक्तुम्। अनियोजकत्वादेव। स च पुरुषाधिष्ठितशरीरकार्यः। पुरुषकार्योऽन्यसाधननियोजकत्वाच्छरीरस्य नियोग इति वाक्य वक्तु न तु तत्राश्वमेधस्य करणभावः संभवति। तस्य तादात्म्यमपि तावद्व्यभिचारि वर्तते। पाकादावसभवात्। तद्व्यभिचार्यप्येकार्थनियतबोधोत्पादकत्वेन निःसन्दिग्धबोधोत्पादकत्वेन प्रमाणम्। अतोऽन्वयव्यतिरेकाभ्या नाव्यभिचारः प्रमाणेऽपेक्ष्यते किं बोधकत्वमात्रापेक्षणात्। न तावद्व्यभिचारनिरासद्वारेण व्यभिचारस्य प्रमाणत्वोपपादकत्वं न चापि व्यभिचारस्य साक्षाद्व्याघातकत्वमित्येतत्प्रतिपादयति।

न चापि व्यभिचारस्य साक्षात्प्रामाण्यघातिता।
क्वचिद् दृष्टा भ्रान्तिबोधे बाधधीरुपघातिका॥

नैव हि व्यभिचारस्य क्वचित्साक्षाद्व्याघातकत्वं दृष्टं येन ताद्रूप्यस्य व्यभिचारित्वे गम्यमाने तेन प्रामाण्य व्याहन्येत। ननु भ्रान्तिबोधे दृष्टं व्यभिचारस्य व्याघातकत्वमत्राह— भ्रान्तिबोधे बाधधीरुपघातिका॥ भ्रान्तिबोधेऽपि बाधधियो व्याघातकत्व न व्यभिचारस्य। ननु भ्रान्तिबोधे यथाभासितार्थव्यभिचारादेव प्रामाण्यव्याघातः। बाधकमपि हि तद्गृहीतार्थस्वरूपान्यथापादनद्वारेणैव पूर्वविज्ञान व्याहन्तीति कथमिव भ्रान्तिबोधे व्यभिचारः प्रामाण्यं न व्याहन्यात्। अथ नैव कदाचिदपि तत्र प्रामाण्यमासीद् यतो व्यभिचारेण व्याहन्यत इति। न बाधबुद्धेर्व्याघातकत्वाभ्युपगमात्। यदि तु सयोगविभागात्मकधात्वर्थाभिप्रायेण कथ विद्व्यतिरिक्ते परिस्पन्दे करणत्वमुच्यते। तथा सति भावनायामेव करणत्वमङ्गीकृत स्यात्। परिस्पन्दोऽपि भावनेति वक्ष्यते। द्वयोर्हि तद्रूपप्रत्ययो भवति। न चैवं न्याय्यम्। अश्वमेधेन स्वर्गं भावयेदिति फलकर्मकानियोज्यात्मव्यापारविषयत्वात्करणभावस्य प्रयत्नपरिस्पन्दात्मा नात्मधर्मक्रियात्मा भावनाव्यतिरिक्ते च नियोगेऽश्वमेधादेः करणभावस्याभ्युपगमात् स्वयंति। अतो व्यापारात्मके नियोगेऽश्वमेधादेः करणभाव इत्यनुपपन्नम्। अर्थाक्रियात्मको

नियोगोऽभ्युपगम्यते ततस्तत्राश्वमेधस्य दुःप्रतिपादः करणभावः। ननु चाक्रियात्मकोऽपि नियोगः साध्यत्वात्कारकेण सम्बन्स्यते। क्रियापि साध्यत्वादेव कारकेण संबध्यते न क्रियात्वात्। साध्यं हि साधनमपेक्षते। तच्चैतत्साध्यत्वमक्रियात्मनोपि नियोगस्य विद्यते किमिति कारकेण न संबध्यते। विषयानुष्ठानेन पुरुषो नियोगं संपादयति। न च यदेव साक्षात्क्रियते तदेव पुरुषकार्यं द्विविधकार्यत्वदर्शनात्। स्वर्गादयोऽनुनिष्पत्तयो यागाद्यनुष्ठानेन क्रियन्ते। अतः स एव नियोगः पुरुषकार्य इत्युच्यते। न च सत्यपि साध्यत्वे स्वर्गं प्रत्यश्वमेधस्य करणत्व यजेताश्वमेधेनेतिवाक्यान्नियोगं प्रति करणत्वावगमात्। तेनाश्वमेधसाधनकं नियोग वाक्यात्पुरुषं कार्यमवगच्छति। यागादिषु नियोगसिद्धयस्वादनुनिष्पन्न साध्यत्वम्। तेनोपपन्नमश्वमेधादेरक्रियात्मकत्वेऽपि नियोगं प्रति करणत्वमिति। न व्यतिरिक्तभावनाप्रसाधनमेतदिति। तदेतदयुक्त न साध्यमक्रियात्मक कारकेण संबध्यते। न ह्येवं संबन्धो भवति मृदा घटमिति। तथाहि घटमिति द्वितीयान्ताच्छब्दात् साध्यरूप एव घटः प्रतीयते। न चासौ साक्षान्मृदेति करणेन संबध्यते। यावत्तत्र करोतिर्नाध्याह्रियते। अपिच स्वाभाविकं वा नियोगस्य साध्यत्वं भवेत् क्रियाया इव क्रियासंस्पर्शकृत वा घटस्येव। तत्र क्रियासंस्पर्शकृतसाध्यत्वाभ्युपगमे नियोगकर्मिकाश्वमेधकरणिका च क्रियाऽङ्गीकृता स्यात्। एवं च भावनायामेव करणत्वमश्वमेधस्य न नियोगे। न चाश्वमेधक्रियासंस्पर्शकृतमेव साध्यत्वम्। तस्य करणत्वेन संबध्यमानस्य मृत्स्थानीयत्वान्न हि पाकेनौदनमिति संबन्धो घटते। क्रियात्मकोऽपि पाकः कर्मणा सह करणत्वेन संबध्यमानः क्रियान्तरमपेक्षते। पाकेनौदन भावयतीति क्रियान्तरगर्भ एव कर्मकरणयोः संबन्धो न साक्षात्। द्वयोरपि क्रियानिर्वर्तकत्वात्। अत एव च कर्मापि कारकमित्युच्यते। तेनाभिभूतक्रियास्वरूपस्याश्वमेधस्य क्रियासंस्पर्शकृतसाध्यत्वेन नियोगेन संबध्यमानस्य भवितव्यं क्रियान्तरापेक्षया। न च काल्पनिकक्रियागर्भः संबन्ध इति वाच्यम्। बाधकप्रत्ययमन्तरेण काल्पनिकत्वस्यासभवात्। तदुक्तं—

"दृश्यमाने वस्तुभेदे नेष्टा शब्दार्थमात्रता"। इति।

न चाश्वमेधकरणिका क्रिया नियोगकर्मिका चेति, येन तत्संस्पर्श-कृतसाध्यत्वं नियोगस्य भवेत् । स्वर्गादिकर्मकत्वात्तस्याः । विधीयमाना हि भावना पुरुषार्थेन भाव्येन संबध्यते नापुरुषार्थेन नियोगेन । अथ स्वाभाविकमेव नियोगस्य साध्यत्वं न क्रियासंस्पर्शकृतमित्युच्यते, तथा सति क्रियैव नियोगशब्देनोक्ता स्यात् । यत्स्वभावतः साध्यात्मकं क्रियैव सा । ननु यदि स्वाभाविकं साध्यत्वस्य, नेयं वचनव्यक्तिः– 'यदेव स्वभावतः साध्यात्मकं सैव क्रिया' इति, किं तर्हि? यत्स्वाभाविकसाध्यत्वोपेतं क्रियैव तदिति । तस्मात्स्वाभाविकसाध्यत्वाभ्युपगमे क्रियैव नियोगं प्राप्नोति । क्रियात्वे चोक्ता दोषः । ननु यजेतेतिशब्दात्साध्यात्मकमक्रियारूपं च नियोगं प्रतीमः । कथमस्य क्रियात्वमापद्यते ? नास्माच्छब्दान्नियोगः कार्यतयाऽवगम्यते, किं तर्हि ? पुरुषव्यापारभावनाकार्यविषयोऽयं नियोगः प्रतीयते न स्वयमेव कार्यरूपः । यद्यपि च कथंचिद्विषयानुष्ठानेन नियोगस्य कार्यत्वं भवति तथापि साक्षात्कार्ये पुरुषव्यापारे संभवति न नियोगस्य कार्यत्वमध्यवसातव्यम् । यदि च शब्दात्कार्यतयाऽप्रतीयमानोऽपि विषयानुष्ठाने सति भवतीत्येतावता कार्यत्वमवगम्यते, ततो लोकपङ्क्त्यादेरपि कार्यत्वप्रसङ्गः । तस्मात्कार्यं पुरुषव्यापारः, तद्विषयो नियोगः प्रेरणात्मकः । तदुक्तम्—

> "स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते ।
> प्रैषैस्तस्य च किं कर्म भावनाशत्रयात्मिका ॥" इति ।

अपि च 'यजेत' इतिवाक्यात्कार्यमवगम्य यागाद्युपेतस्वव्यापारे प्रवर्तमाना दृश्यन्ते न नियोगे । तेन स्वव्यापार एव तदनुष्ठातृभिः कार्यतयाऽवगम्यते इति गम्यते । न च नियोगसिद्ध्यर्थं तत्र प्रवर्तन्त इति वक्तव्यम् । 'साङ्गं यागं फलाय करोमि' इत्यनेनोल्लेखेन प्रवृत्तिदर्शनान्न नियोगायेति । न चानुष्ठानकाले नियोगं क्रियमाणमुपलभामहे । यथैव ह्यनियुक्तो भोजनादौ प्रयोजनवशेन प्रवर्तमानो भोजनादिकमेव संपादयति, न नियोगम्, तथैव नियुक्तोऽपि यागादि कुर्वन्नुपलभ्यते न नियोगम् । प्रवृत्तिहेतुरस्तु नियोगः । नियुक्तोऽस्मीति मन्वानो यागादौ प्रवर्तते न तु स एव क्रियते । अपि च प्रागवस्थितो वा नियोगः कार्यतया चोद्येत, भावनेव भविष्यन्वा ? न तावत्प्रागवस्थितः । कार्यत्वविरोधात् । न हि प्रागवस्थितं वस्तु विद्यमानं

क्रियते असत्कार्यकरणाभ्युपगमात्। नापि भविष्यत्। अनुष्ठानवेलायां यागाद्युपेतपुरुषव्यापारमात्रकार्यदर्शनात्। यत्तु गुरुचोदितः कस्मिंश्चिदविदितप्रयोजनेऽर्थे प्रवर्तमानः किमनेन प्रयोजनमिति पृष्टः सन्नेवमाह—किं मम प्रयोजनेन, गुरोराज्ञैव मम कार्या, साऽविदितप्रयोजनानुष्ठानेनापि सिद्ध्यतीत्यस्माद्वाक्यादाज्ञैव कार्यतयाऽवगम्यत इत्युच्यते, तदयुक्तम्। आज्ञाविषयकरणादाज्ञाकरणोपचारात्। यथा त्वदीय वचनं मम कर्तव्यमिति वचनार्थकरणाद्वचनकरणमुपचरन्ति। अपि च सविषयो नियोगः प्रतीयते। यत्र च पुरुषो नियुज्यते स तस्य विषयः। तत्र स्वव्यापारे यागाद्युपबद्धभावनाया नियोज्यमुपलभामहे यागेन भावयेत्स्वर्गमिति, न नियोगे। तथा च वक्तारो भवन्ति गमनकरणे नियुक्तोऽस्मि गुरुणा, यागकरणे नियुक्तोऽस्मि वेदेनेति। तेन यागाद्युपबद्धः स्वव्यापार एव पुरुषसाध्यः। न ह्यसाध्ये नियोगः संभवति। ननु साधिक्रियाव्याप्यं साध्यमित्युच्यते। पुरुषव्यापारस्य च व्यापारान्तराभावान्न साधिक्रियाव्याप्तिरस्ति। व्यापारान्तराभ्युपगमे चानवस्था। न चोपलभ्यते व्यापारान्तरम्। अतः कथं स साध्य इत्युच्यते ? नैष दोषः। कारकाप्तिसिद्धिमनुभवतीत्येवं पूर्वापरभावसामान्येन गौण्या वा वृत्त्या साध्य इत्युच्यते न साधिक्रियाव्याप्यतया। तदुक्तम्—

"नैषा कस्यचिदुत्पाद्या जनिका न च कस्यचित्।" इति

"फलस्य यागजन्यस्य जनिका न च कस्यचित्।" इति।

न कस्यचिदुत्पाद्येत्यत्र न कस्यचिदिति व्यापारनिर्देश। यदि च धात्वर्थकरणको नियोगः करणभाव्यतया चोद्येत न भावना, ततस्तस्य फलकर्मकत्वाभावाद्यागेन भावयेत्स्वर्गमिति न घटेत। नियोज्यकर्मको हि नियोगो न फलकर्मकः। ननु च नियोगसिद्ध्यनुगुणा स्वर्गादिसिद्धिप्रतीतिरिति घटत एव संबन्धः। न, असाध्यस्यापि जीवनवद्विशेषणत्वोपपत्तेः। सर्वं चैतदुपरिष्टाद्वक्ष्यामः। नियोगकार्यत्वे च फलविषयिण्यपेक्षा न स्यात्। 'उद्भिदा यागेन कुर्यात्' इत्यवधारिते कार्ये किमिति कार्यान्तरमपेक्ष्यते। लोके च मृदा कुर्यात्किमित्यपेक्षास्तीति विशेषः। अपि च 'ममेदं कर्तव्यं' 'ममेदं कार्यम्' इत्यादिसंकल्पोत्पन्नज्ञानसदृशं कार्यमात्रविषयं वाक्याद्विज्ञानं स्यान्न प्रेरणावगमः। अस्ति चासौ प्रथममेव। तस्मान्न नियोगः कार्यरूपो

लिङादेरवगम्यते, किं तर्हि? प्रेरणारूपः। अथ प्रेरणात्मकस्यैवार्थादिकार्यत्व-मुच्यते, तदयुक्तम्। यत्र हि पुरुषो नियुज्यते तत्तस्य कार्यं, स्वव्यापारे चासौ नियुज्यते न नियोगे इत्युक्तम्। यदि हि प्रेरणात्मके नियोगे पुरुषो नियुज्येत ततोऽकार्ये नियोगासम्भवान्नियोग एवार्थोऽर्थान्तरस्य कार्यो युज्येत; न त्वेतदस्ति। अर्थान्तरे नियुज्यमानत्वात्। तस्मात्प्रमाणं नियोगो न प्रमेयम्। यदि चाव्यापाररूपो लिङादिनोच्यते ततो भेदप्रमाणाभावादेक एवासौ नित्यश्च यागादिविषयोऽभिधीयमानस्तत्र तत्र पुरुषं प्रवर्तयतीत्येतदेव न्याय्यं, किं तस्य कार्यत्वकल्पनेन। तस्माल्लिङादिव्यापारात्मकोऽक्रिया-त्मको वा नियोगाऽश्वमेधकरणिकाया भावनाया पुरुषं प्रवर्तयति, न तु स एवाश्वमेधकरणकः प्रतीयते। ननु यजेताश्वमेधेनेति प्रत्ययोपात्ते नियोगेऽ-श्वमेधस्य करणभावोऽवगम्यत एव किमत्र कल्प्यते। नैतदस्ति। भावनायामस्य करणत्वमवगम्यते। सापि च प्रत्ययोपात्तैव। उभयोपादानेऽपि च विशेषो-ऽभिहित एव। लिङादिव्यापारात्मकनियोगपक्षे च लिङादिरेव युगपत्करो-त्यभिधत्ते च तथाप्रतीतेः। यदि च प्राक् क्रियते पश्चादभिधीयते भूत एवाभिधीयमानः पुरुषं प्रवर्तयति। न च तत्काले अविद्यमानस्याकर्तृत्वं शब्दज्ञानस्याविद्यमानस्यापि कालान्तरभाविन्यर्थज्ञाने कारकत्वदर्शनात्। अव्यापारात्मकनियोगपक्षे तु प्रेरणारूपो भावोऽभिधीयत एव केवलम्। तदभिधायकत्वाच्च लिङादेः प्रेरकत्वम्। अकृतसंबन्धोऽपि च प्रत्ययः स्वार्थव्युत्पन्नसंबन्धायाः प्रकृतेः परः प्रयुज्यमानः प्रेरणाबुद्धिं करोति। किमत्र कुर्मः। वार्तिककारस्तु लिङादिव्यापारं प्रेरणामाह—इह लिङादियुक्ते-भ्यो वाक्येभ्यो द्वे भावनेऽवगम्येते शब्दात्मिका चार्थात्मिका चेति। प्रयो-जकव्यापारश्च भावना। यथोक्तम्—

"प्रयोजकक्रियामाहुर्भावनां भावनाविदः।" इति।

यदि च व्यापाररूपो नियोगः स्यात् ततः प्रयोजकलिङादिव्यापार-त्वाच्छब्दभावनेत्युच्यते नान्यथा। उक्तं च **भट्टपादैः**—स्वाध्यायाध्ययनविधिना सर्वे विधायकाः स्वाध्यायपदोपात्तश्चात्मा नियुज्यते भावयेदितीति। एतदनेन निदर्शितं विधिनियुज्यमानवल्लिङादिप्रयोजकव्यापारो भावनेति। युक्तं चैतत्। प्राक्सत्त्वे प्रमाणाभावात्। यथैव ह्यर्थभावनोत्पद्यते तथैव

**इष्टवान्यज्ञैरित्यत्रापि द्रव्यप्रधानभावनाभ्युपगमा-भिष्टादिषु तथाप्रतीतेरविरोधः ।**

**यत्तूक्तं भावनाविषयत्वप्रतीतेः करणत्वहानिः, तद्[3] अनिरूपितकरणतत्त्वस्य ।**

**तथाहि—**

**करणं[1] खलु सर्वत्र कर्तृव्यापारगोचरः ।**
**तिरोदधाति कर्तारं प्रधानं तन्निबन्धनम् ॥**

शब्दभावनाऽपि । स्वाव्यापाराभिधानं चान्यत्रादृष्टमपीहैव दृष्टत्वादभ्युपगम्यते। तस्मादश्वमेधकरणत्वावगमादस्ति यागव्यतिरिक्ता भावनेत्यलमतिप्रसङ्गेन । प्रकृतमनुसरामः—

बहुगर्वतमश्छन्नं मतं ये न विदुर्बुधाः ।
तमोपनुत्तये तेषामुद्योतोऽयं मया कृतः ॥

नन्विष्टवान्यज्ञैरित्यत्र सत्यपि क्तवतुप्रत्ययप्रयोगे भावनाया अप्रतीतेर्न भावनायां यागस्य करणत्वमतोऽत्र या गतिः सान्यत्रापि भविष्यतीत्या-शङ्क्याह—**इष्टवान् यज्ञैरिति ।**

किं कृतवान् ? इष्टवानिति करोतिसामानाधिकरण्याद् द्रव्यप्रधानभा-वनाभिधानमिति भावनायामेव यागस्य करणत्वमित्यर्थः । तथा किंक्रियो देवदत्तः ? पक्ता, पाचक इति करोतिसामानाधिकरण्यदर्शनादस्त्यत्रापि द्रव्यनिष्ठभावनाप्रतिपत्तिरित्यादिग्रहणम् । यत्तूक्तम् धातुगोचरनिर्वृत्ति-पर्यन्तत्वाच्च कर्मतेति, तदनुभाष्य दूषयति—**यत्तूक्तमिति ।**

तद् अनिरूपितकरणतत्त्वस्य वचनमित्यर्थः । कीदृशं पुनः करणस्य रूपमित्यत आह—**तथाहि करणमिति ।**

न खलु कर्तृव्यापारलक्षणया भावनया व्याप्तत्वाद्धात्वर्थः कर्म भवति न करणम् । सर्वेषामपि करणानां कर्तृव्यापारव्याप्तत्वात् । दारु छिन्दता हि पुरुषेण कुठारो गृह्यते उद्यम्य च निपात्यते । नान्यथा तेन दारु छिद्यते । कुठारेण दारु द्विधा क्रियतेऽतः साधकतमत्वात्करणं भवति ।

---

१ 'इत्यपि' इति खपुस्तके । २ 'प्रकरणस्य' इति खपुस्तके । ३ 'तदनुरूपिताकरणत्वात्' इति खपुस्तके ।

**न खलु कर्तृव्यापारलक्षणायां[1] भावनायां धात्वर्थस्य कर्मत्वप्रसङ्गः अकरणत्वं वा परश्वादावपि[2] तथाप्रसङ्गात् ।**

**तथाहि-छिदादिषु न साक्षाद्व्याप्रियते कर्ता, अपि तु परश्वादिकरणे । तद्व्यापारस्तूद्यमननिपतनादिलक्षणः परशुगोचर एव ।**

**अत एव करणस्या[3]व्यवहितव्यापारतया क्रिया[4]सिद्धेः साधकतमत्वम् ।**

**तद्व्यापारापेक्षप्रवृत्तितया च करणस्य कर्तुः स्वात[6]न्त्र्यमारादुपकारिणोऽपि ।**

पुरुषस्य कुठारव्यवहितस्य तत् कर्म भवति यदर्थं पुरुषः प्रयतते, न तु तत् साधयितुकामो यदालम्बते । सोऽयं कर्ता करणेन फलमुपजनयति । तद्द्वारेण कर्तृत्वात्साक्षान्निष्पादनाशक्तेः । तदुक्तम् —

"तिरोदधाति कर्तारं प्रधानं तन्निबन्धनम् ।" इति ।

प्रधानं कर्तारं तिरोदधाति कर्तुः प्राधान्यादित्यर्थः । अथवा तिरोदधाति कर्तारमिति प्रतिज्ञायते । तत्र हेतुः प्रधानं तन्निबन्धनमिति । यस्मात्प्रधानं करणनिबन्धनं न साक्षात्कर्तृनिबन्धनं तेन कर्ता करणेन फलमभिनिर्वर्त्यते । प्राधान्यं तन्निबन्धनादिति तु समीचीनः पाठः । एतदेव प्रपञ्चयति — न खल्विति ।

परशोः कर्तृव्यापारव्याप्यतां दर्शयति — तथाहीति ।

वेगवता हि परशुना तीक्ष्णधारेण संयुज्यमानं दारु छिद्यते । छेदने परशुरानन्तर्यात्साधकतमत्वेन करणं भवति । कर्तृव्यापारस्तु कुठारे वर्तते न दारुणि इति, तदिदमाह—अत एवेति ।

यदि करणेनैव फलं साध्यते कस्तर्हीदानीं कर्तुरुपयोगः, कथं च कर्तृव्यापारः फलस्य भावनेत्यत आह— तद्व्यापारेति ।

१ 'लक्षणाभा' इति खपुस्तके । २ 'दारुवधादौ' इति खपुस्तके । ३ 'करणस्य व्यव' इति खपुस्तके । ४ 'क्रियासिद्धेः' इति खपुस्तके । ५ 'भावनायां' इति खपुस्तके ।
६ 'न्त्र्यव्यापाराद्' इति खपुस्तके ।

**अन्यथा करणमेव स्यात् ।**

**अपि च—**

**साधनानामभावः स्यात्कर्तृकर्मातिरेकिणाम् ।**
**साधनानां नियोगो हि कर्तृव्यापार इष्यते ॥**

कर्तृव्यापारायत्ता हि करणस्य प्रवृत्तिः । यदि पुनर्व्यसत्युद्यमने निपातने च परशुना दारु छिद्यते । तदेवं करणव्यवधानादरेणापि फलस्योपकुर्वतः स्वातन्त्र्यं भवति, कर्तृत्वं भवतीत्यर्थः । यदि पुनरव्यवधानेनोपकुर्यात्ततः करणमेव स्यादित्याह—**अन्यथेति** ।

अकारो वा प्रश्लिष्यते । तस्यायमर्थ—असति कर्तृव्यापारे परशोः करणतैव न स्यादिति । न हि भूमौ तिष्ठता कुठारेण दारु छिद्यते । यदि च कर्तृव्यापारव्याप्तिमात्रेण कर्मत्व स्यात्ततः करणादीनामपि कर्मत्व स्यात् । कारकनियोक्तृत्व हि कर्तृत्वं ततः करणादीनि कर्त्रा नियुज्यमानानि कर्माणि भवेयुः । स हि स्थाली चुल्ल्यामधिश्रयति काष्ठान्याहरत्यग्नौ निदधाति अग्निं प्रदीपयति तन्दुलान्विक्लेदयाति । तस्यास्य कारकसमूहस्य देवदत्तनियोज्यत्वेन कर्तृव्यापारविषयत्वात्कर्मत्वप्रसङ्गः स्यादित्याह—**अपिचेति** ।

नन्वपादानसंप्रदानयोर्वृक्षात्पर्णं पतति, ब्राह्मणाय गां ददातीत्यत्र कर्तृव्यापारविषयत्वेनाप्रतीयमानयोः कथमिव कर्मत्वप्रसङ्गः ? देयं हि दातृव्यापारविषयो न प्रतिग्रहीता । पर्णं पततीत्यत्रापि प्रत्ययोपात्तपरिस्पन्दलक्षणव्यापारविषयः संयोगविभागात्मकं पतनं न वृक्षः । तथा चैवं प्रतीयते—पतति पातं करोतीति । अथोच्येत यदाऽऽहूय देवदत्ताय दीयते तदाऽऽहूयमानस्य कर्तृनियोज्यत्वेन कर्मत्वमिति । न तदा तस्य संप्रदानत्वम् । यदा तस्मै दीयते तदाऽसौ संप्रदान, न यदाऽऽहूयते । नैव दानवेलायां कर्तृव्यापारसंस्पर्शं पश्यामः । अत्रोच्यते । यदा प्राङ्मुखो हस्तं प्रसार्य गृहाणेति कर्त्रा नियुज्यते दीयते च तस्मै, तदा कर्तृनियुक्त एव तथाकृतेन ग्रहणेन दानं निर्वर्तयन् कर्म स्यात् । तथा कृतच्छिद्रं घटादि यदोदकपानादिकर्त्रा नियुज्यते पानादिव्यवस्थितो तदा तस्मादुदकं पतती-

**प्रलीनेदानीं कर्तृकर्मातिरिक्तसाधनान्तरकथा[1] साधनान्तरनियोगः कर्तृव्यापार इति नियोगविषयता-[2] तिपत्त्या सर्वत्र[3] कर्मत्वापातात् ।**

**कथं तर्हि कर्मेतरसंविभागः? कथं च करणपरिक्षीणे कर्तृव्यापारे तदाप्तिविरहिणः फलस्य कर्मता ?**
**उच्यते—**

**अन्यार्थाप्तिविवक्षायामकर्मातिशयाद्विना[4] ।**
**उद्देशादन्यवृत्त्यापि फलमत्रेष्यतेतराम् ॥**

**यत्खलूपदिष्टवस्त्वन्तरायाः[5] क्रियायाः[6] नान्तरीयकत्वेन**
त्येवमपादानस्यापि कर्तृनियोज्यत्वेन कर्मत्वप्रसङ्गः। वृक्षोऽपि यदा पर्णपातार्थं केनचिद् वृक्षमारूढेन बालेन नियुज्यते तदाऽपादानस्यापि कर्तृनियोज्यत्वेन कर्तृव्यापारविषयत्वात् कर्मत्वप्रसङ्ग इत्येवं यथासम्भवं योज्यम् । एतमेव श्लोकार्थं विवृणोति—**प्रलीनेति** ।

कस्तर्हि कर्मेतरसंविभागः? फलस्य च करणव्यापारविषयत्वात्कर्तृव्यापारविषयत्वाभावादस्मिन्पक्षे कर्मत्वं न स्यादित्याह—**कथं तर्हीति** ।

ननु न परानिष्टापादनमात्रेण स्वपक्षसिद्धिः संभवतीत्याशङ्कयाह—**उच्यते इति** ।

न वयं परश्वादेरपि कर्तृव्यापारविषयत्वेन कर्मत्वं स्यात् कर्तृकर्मातिरिक्तकारणाभावादित्येतावन्मात्रमेव वदाम किं तर्हि यागादिविषयस्यापि कर्तृव्यापारस्य स्वर्गादिफलकर्मत्वं यागकरणकत्वं च प्रतिपादयामः । तथाहि स्वर्गं प्राप्तुं यागं करोति न यागं प्राप्तुम् । तेनोद्दिश्यमानत्वेन स्वर्गस्यैव कर्मत्वं न यागादेः । कर्तुरीप्सिततमं कर्मेत्याहाचार्यः । तस्मादिच्छातिशयाभावात्कर्तृव्यापारव्याप्तमपि यागाद्यकर्म यागादिप्रवृत्त्यापि तु क्रियाफलमेवाप्तुमिष्यते; तस्मात्तस्यैव कर्मत्वमिति श्लोकार्थः । अमुमेवार्थं विवृणोति—**यत् खल्विति** ।

१ 'सकथा' इति खपुस्तके। २ 'ताप्रति' इति खपुस्तके।
३ 'सर्वकर्म' इति खपुस्तके। ४ 'या न कर्मा' इति खपुस्तके।
५ 'खलुदिष्ट' इति खपुस्तके। ६ 'क्रियाया दर्शनेऽविरुद्धम्' इति खपुस्तके।

विषयतामुपयदभिसंहितं नेदं कर्म । इच्छाविषयाभावात् । उद्देश्यं तु कर्मान्यगोचरयापि क्रियया तस्यैवाप्तुमिष्यमाणत्वात्तदभिसन्धाय प्रवर्तिताया इतरसंबन्धस्य नान्तरीयकत्वात् ।

अतः करणस्यापि धात्वर्थस्य साध्यत्वप्रतीतिनिदर्शने[1] अविरुद्धं ।

यथा परशुना छिनत्तीति परशोरुद्यम्यमानत्वनिपात्यमानत्वप्रतीतिः ।

परशुमुद्यच्छति निपातयति द्विधाभवनायेति निदर्शनं प्रयुक्तं चेति ।

यत्तु कर्तृव्यापारोऽधिश्रयणादिर्धात्वर्थान्तरात्मक इति । तत्रोच्यते ।

कथ्यमानाद्रूपभेदाद्भिन्ना धात्वन्तराद्गतेः ।

यदि स्वर्गकर्मिकैव क्रिया किमिति तर्हि यागादयः क्रियन्त इति यच्चोद्यन्तत्परिहारं विवृणोति—नान्तरीयकत्वेनेति ।

नेदं कर्मेति प्रतिज्ञा । इच्छातिशयाभावादित्युत्तरम् ।

उद्देश्यमिति स्वपक्षे साधनोपन्यासः । एवं च यदप्यधस्ताच्चोदित साध्यभावरूपप्रतीतिनिदर्शनाभ्यां च तिङन्तेषु भावनामिच्छतो धात्वर्थस्य कर्मत्वप्रसङ्गः करणत्वं न स्यादिति, तदपि परिहृतमित्याह—अत इति ।

अत्रैव दृष्टान्तमाह—यथेति ।

अनेन करणस्य परशोः साध्यरूपप्रतीतिर्निदर्शिता ।

अनेन करणत्वे साध्यत्वेन निदर्शनमुपन्यस्तम् । यत्तूक्तं पूर्वपक्षे—

कर्तृव्यापार इष्टश्च पच्यादौ यदि भावना । इति,

तदनुभाष्य निराकरोति—यत्त्विति ।

१ 'प्रतीतिर्दर्शने' इति खपुस्तके ।

**अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यति ।**

**सर्वथा पचतिर्यजतीति प्राक्प्रयुज्यमानधातुगोचरो न भवतीति प्रतिपादितम् । धात्वन्तरैस्त्वभिधानं करोति भावयतिभ्यामिव न नः पचतिमावहति ।**

**अथ वा[2]—**

पचतिपठतिगच्छत्यादिषु तावत् प्रत्ययकथ्यमानयोर्धात्वर्थभावनयोर्भिन्नरूपत्वान्न धात्वर्थो भावना, अपि तु भावनायां धात्वर्थस्य करणत्वेन कर्मत्वेन च संगतिः । साध्यत्वप्रतीतिनिदर्शनाभ्यां च भावनायां व्यतिरिक्तायां प्रत्ययोपात्तायां धात्वर्थसंगतिः । यत्तु 'अधिश्रयति' 'आवपति' इत्याद्याख्याते कर्तृव्यापारस्याधिश्रयणादेर्भावनाया धात्वर्थत्वं, न तदस्माकं कश्चन दोषमावहति । धात्वभिहितत्वेऽप्यन्योत्पादानुकूलस्य भावनारूपस्याविनाशादित्याह—**अन्योत्पादेति** । एतदुक्तं भवति—नास्माभिः सर्वत्र प्रत्ययार्थोऽभ्युपगम्यते । किं तर्हि ? यत्र पचत्यादौ धात्वर्थव्यतिरिक्तः प्रतीयते तत्रैव ।

अमुमेवार्थं विवृणोति—**सर्वथेति** ।

कथ्यमानाद्रूपभेदाद्भिन्नेति क्वचित्पाठः । तत्राप्ययमर्थः—अधिश्रयत्यादौ धातुप्रत्ययकथ्यमानधात्वर्थभावनारूपभेदाद्भिन्नापि भवेद्धात्वर्थेन सह [ सङ्गतिः । तत्र न किञ्चित् ] प्रदुष्यति ।

अथ च 'अधिश्रयति' 'आसिञ्चति' इत्यत्रापि अन्यो धात्वर्थः, अन्या च भावना प्रतिपाद्येत्याह—**अथवेति** । 'अधिश्रयति' इत्यत्र स्वरूपेण घटादिवदसाध्यात्मकः प्रत्ययोपात्तभावनासंस्पर्शकृतसाध्यत्वः स्थालीचुल्लीसंयोगो धात्वर्थः, तत्कारणभूतस्तु कर्तृव्यापारः प्रत्ययार्थ इति न धात्वर्थत्वं भावनायाः । एवम् 'आसिञ्चति' इत्यत्रापि स्थाल्युदकसंयोगो धात्वर्थः प्रत्ययार्थस्तु स एव । पचतीत्यत्र तन्दुलावयवविभागः संयोगशैथिल्यं वा धात्वर्थः । यद्यपि चात्र प्रयोज्यव्यापारस्तन्दुलपरिस्पन्दो विद्यते तथापि 'पच्यन्ते तन्दुलाः स्वयमेव' इत्यत्र परिस्पन्दस्य प्रत्ययार्थत्वात्संयोगविभागवचनत्वमेव पचेर्निर्दिष्टमिति अत्राप्यव्यभिचारात्स एवार्थः । प्रत्यया-

---

१ 'पचतीति' इत्येव खपुस्तके । २ 'अपि च' इति खपुस्तके पाठः ।

**धातूनामभिधानीयान् कर्तृकर्मसमाश्रयान्।**
**लब्धात्मनः क्रियारूपान् विशेषान् प्रतिजानते॥**

**यथाऽधिश्रयते चुल्लीस्थालीसंयोगविशेषः आसिञ्चतेरासिच्यमानजलाधारसंयोगभेदः। एवं सर्वत्र। यावत्पचेस्तन्दुलावयवानां विभागः प्रशिथिलावयवसंयोगो वा।**

र्थस्तु कर्तृव्यापार उभयत्र। भुङ्क्ते यजति जुहोति इत्यत्र भोज्यदन्ताद्यवयवसंयोगविभाग-स्वत्वावियोग-आहवनीयप्रक्षिप्यमाणद्रव्यसंयोगा धात्वर्थास्तत्कारणभूतस्तु कर्तृव्यापारः प्रत्ययार्थः। एवमन्यत्रापि दर्शयितव्यम्। यद्यपि च देन्तस्यापि संयोगविभागावुभयसंस्थौ, स्वत्ववियोगात्मकः स्वस्वामिविभागश्च तथापि गच्छति यजति इत्यत्र गमनादेः संयोगविभागात्मनो गन्तृयजमानाधारत्वेन शब्दात्प्रतीतेराधिश्रयणस्याधारकर्माश्रितस्याप्यधिश्रीयमाणस्थाल्यात्मककर्माश्रितत्वेन शब्दादेवावगमात् **कर्मकर्तृसमाश्रयान्** इत्युक्तम्। एवमन्यत्रापि कर्तृकर्मसमाश्रयत्वं संयोगविभागयोर्यथाप्रतीति वाच्यम्। संयोगविभागाश्चैते लब्धात्मानो न क्रियावत्साध्यस्वभावाः निष्पन्नानामुत्तरकालं घटादिवदुपलम्भात्। तेन प्रत्ययोपात्तक्रियासंस्पर्शकृतसाध्यत्वाभिप्रायेण **क्रियारूपान्** साध्यरूपानित्याह। क्वचित्क्रियारूपादिति पाठः, स शोभन एव। **विशेषानिति**। संयोगविभागरूपत्वेन विशेषानित्यर्थः।

एतदेव प्रपञ्चयति—**यथेति**। आसिच्यमानमुदकमाधारश्च स्थालीति विग्रहः। एतदुक्तं भवति। करोति उत्पादयति भावयति इत्यादिविस्पष्टभावनावचनकतिपयधातुव्यतिरिक्ता ये धातवस्ते संयोगविभागार्था इति नाधिश्रयत्यादिशब्दे धात्वर्थत्वं भावनाया इति। ननु संयोगविभागार्थत्वे धातूनां चलित्वा स्थितेऽपि देवदत्तादौ संयोगविभागयोर्गच्छत्यादिधात्वर्थयोर्विद्यमानत्वाद्देवदत्तस्य गमनं चलनं वर्तत इति प्रतिपत्तिः स्यात्, अविरलसंयोगविभागार्थत्वेऽपि गव्यादेर्जलवर्तिनि मत्स्ये स्थिरमूर्तौ तथाविधसंयोगविभागसद्भावात्तस्य गमनं वर्तत इति प्रत्ययः स्यात्, तथा जलस्थिते देवदत्तादौ

१ 'त्मनोऽक्रिया' इति खपुस्तके। २ क पुस्तके 'गन्तृस्यापि' इति पाठः।

उदासीनत्वविच्छेदलक्ष्यं धात्वर्थकारणम् ।
स्पन्दव्यापारपर्यायं करोत्यर्थं प्रचक्षते ॥

तथाहि—अधिश्रयति उदकमासिञ्चति पचति चेत्यधिश्रयणादिसंयोगभेदेभ्योऽव्यापारात्मकेभ्यो भेदेन करोति स्पन्दते चेष्टते व्याप्रियत इति व्यापाररूपमपेक्ष्यते । न चैष तज्जन्याभिमतसंयोगविभागालम्बन एष प्रत्ययः । यतः—

व्यापारबुद्ध्युपजनो न संयोगविभागयोः ।
सतोरपि हि चेष्टित्वा विरामं समुपागते ॥

न हि चलित्वा स्थितस्य क्रियाप्रभवपूर्वोत्तरदेशसंयोगविभागाभावः । अतस्तदालम्बनो व्यापारप्रत्ययो न जातु विरमेत् ।

संयोगविभागौ वर्तेत इति । तस्मात्परिस्पन्दवचनो गच्छत्यादिरिति गम्यते । तत्र केचिदाहुः—परिस्पन्दवचन एव गच्छत्यादिः । न च तावता भावनाया धात्वर्थत्वं 'देवदत्तो गच्छति ।' इत्यत्र परिस्पन्दव्यतिरिक्तप्रयत्नस्य भावनात्मनः प्रत्ययान्न संयोगविभागवचनता । अन्ये त्वाहुः-नायं दोषो भवति शब्दस्वभावतः क्रियमाणसंयोगविभागवचनत्वाद् गम्यादेः । न च स्थिते देवदत्तादौ क्रियमाणौ संयोगविभागौ मनसि बुद्धिं कुरुतः । तथाऽप्रतीतेः, किमत्र कूर्मः ?

यत्पुनरिदमुक्तं 'बाध्यो लक्षणभेदश्च ननु धात्वर्थभावयोः' इति,

तत्राप्याह—उदासीनत्वेति । धात्वर्थस्तावत्संयोगविभागात्मको दर्शितः । भावस्तु परिस्पन्दात्मको धातुवाच्यसंयोगविभागकारणं यस्मिन्सत्योदासीन्यप्रच्युतिरिति ।

---

१ 'लक्ष्यं त्वर्थं' इति खपुस्तके । २ 'यथा हि स्थाली अधि' इति खपुस्तके । ३ 'पचति पाचयति' इति खपुस्तके । ४ 'भेदेभ्यो व्या' इति खपुस्तके ।

**विभागेन समुच्छेदात्संयोगप्रचयो न हि ।**
**भविष्यद्वृत्तसंयोगाविभागाध्यक्षता कथम् ॥**

**यद्यप्यविच्छिन्नोत्पाददेशसंयोगविभागप्रचय आलम्बनमिति । तदपि न सम्यक् । न ह्युत्तरदेशसंयोगः पूर्वविभागादृते, न च विभागः संयोगेन सहैव वा । तद्विभागेनोच्छेदात् कुतस्तत्प्रचयः ।**

**अविच्छिन्नोत्पादश्च नियोगभाव्युत्तरकालानां स वर्तमानानाम् । तेषु वर्तमानानागतेषु कथमिन्द्रियं धियमुपजनयेत् ? मनोऽपि चागणितकुशलस्य नैव समर्थम् । यथैकादिक्रमेण गणयतो विंशत्यादिषु विंशत्यादिज्ञानं भवति नागणयतः । तद्वदिह संयोगविभागान्गणयतश्चलतीति बुद्धिः स्यान्नागणयतः ।**

**अपि च—स्थाणौ पूर्वोत्तरश्येननिबन्धनाभ्यां संयोगविभागाभ्यां व्यापारधीः स्यात् ।**

यत्तु पूर्वपक्षेऽभिहितम्—अविच्छिन्नोत्पत्तिसंयोगविभागालम्बनोऽयं प्रत्ययः न च स्थिते तथाविधसयोगविभागसद्भावः अतः कथमतिप्रसङ्ग इति, अत्राप्याह—**विभागेनेति** ।

एतदेव विवृणोति—**यद्यपीति** । न ह्युत्तरदेशसंयोगः पूर्वदेशविभागादृते । न च विभागे सत्येव प्राग्देशसंयोगोऽनुवर्तते । सहास्थितिविरोधात् । अतो नास्ति संयोगप्रचयः । अतो न तदालम्बनत्वं वक्तुं शक्यमिति । उत्तरार्द्धं विवृण्वन्नाह—**अविच्छिन्नेति** ।

न च भूतभविष्यत्संयोगविभागविषयमनोमात्रजन्यं ज्ञानं संभवति । बाह्येर्थे चक्षुरादिसंकीर्णत्वान्मनसो वर्तमानविषयत्वाच्चेत्याह—**मनोऽपीति** ।

एतद् व्याचष्टे—**यथैकेति** । अगणितचक्षुरादीन्द्रियस्यागणितवस्तुस्वाभावस्य चेत्यर्थः ।

अविच्छिन्नोत्पादसंयोगविभागालम्बनत्वे चायमपरो दोष इत्याह—**अपि चेति** ।

आधारदेशसंयोगविभागाभ्यां सेति चेत्, तदयुक्तम् ।

तथाहि—

जलावयवसंयोगविभागौ स्थिरमूर्तिषु ।

जलाधारेषु मत्स्येषु व्यापारप्रत्ययाछिना ॥

प्रतीतं हि जलं मत्स्यानां देशः न स्थाणोरिव श्येनो न देशः । तदवयवानां च संयोगविभागसद्भावेपि तेषु महत्त्वादकम्पनीयेषु बलवद्विधारकप्रयत्नेन विधृतात्मसु न क्रियावगमः । तस्मान्नैष तन्निबन्धनः ।

नभसोऽप्यप्रत्यक्षत्वात्तद्वृत्त्योः संयोगविभागयोर्दुर्लभा प्रत्यक्षता । न च वियच्छिततालोकावयवनिबन्धनत्वम् । सन्तमसे झटिति विद्युति क्रियाप्रत्ययात् ।

ननु च देशसंयोगविभागालम्बनोऽयं चलतीतिप्रत्ययो न च स्थाणोः श्येनो देशावित्युक्तमित्याशङ्क्याह—आधारेति ।

कस्मादित्याह—तथाहीति । जलवर्तिनः स्थिरमूर्तेर्मत्स्यस्याविच्छिन्नोत्पन्नाया एव जलदेशेन संयोगविभागाः सम्भवन्ति । न च तत्र चलतीति प्रत्ययो जायते । तस्मादकारणमेतदित्यर्थः ।

एतदेव विवृणोति—प्रतीतमिति ।

यदि संयोगविभागालम्बनोऽयं चलतीति प्रत्ययः स्यात् तत आकाशे पक्षिणि गच्छति न स्यादाकाशाप्रत्यक्षत्वेन तद्वृत्तिसंयोगविभागयोरप्रत्यक्षत्वादित्याह—नभसोऽपीति । एतच्च वैशेषिकाद्यभिप्रायेणोक्तं, न त्वप्रत्यक्षं नभः तत्प्रत्यक्षत्वस्य प्रागेव प्रतिपादितत्वात् ।

नन्वाकाशविततालोकप्रत्यक्षताऽस्त्येव तत्संयोगविभागालम्बनोऽयं भविष्यतीत्याशङ्क्याह—नचेति । नालोकावयवनिबन्धनत्वं संयोगविभागयोः प्रत्ययालम्बनयोरित्यर्थः । कस्मादित्याह—सन्तमसे इति । रात्रान्धकारे विद्युति चलतीति प्रत्ययो भवति न तत्र व्यतिरिक्तं तेजोन्तरमस्ति यन्निबन्धनौ संयोगविभागौ विद्युतः स्याताम् । तमसस्तु भावत्वेऽपि तेजसापसारितत्वान्न तदवयवसंयोगस्तेजसः संभवति । अन्यथा-

**तस्मादस्ति धातूपात्ततदाहितविशेषातिरिच्यमानात्मा क्रियापदार्थो भावनापर्यायः।**

**नन्वेवं भावनातो धात्वर्थस्य निष्पत्तिस्ततश्च फलस्येति कथं तन्निष्पाद्यो धात्वर्थस्तस्यां करणं, स्वर्गादि चान्यसाध्यं कथं कर्म ? तस्माद्धात्वर्थ एव भावनास्तु। स्वर्गे धात्वर्थे चान्तरा व्यापारान्तरानुपलम्भादित्युक्तम्।**

**उक्तोत्तरमेतत्। तथाहि--**

वयवसंयोगेऽपि च सर्वत्र चलतीति प्रत्ययो न स्यात्। संसर्गिद्रव्यस्य च तेजःसलिलादेर्घटवदकार्यस्यावयवसङ्घातमात्ररूपत्वान्न तदवयवी विद्यते। येनैकदेशसंयोगेऽपि सर्वत्र चलनप्रत्ययः स्यादित्यर्थः।

प्रकरणार्थमुपसंहरति--**तस्मादिति**। धातूपात्तश्चासौ तदाहितविशेषश्चेति विग्रहः। तदाहित इति व्यापाराहितः। गच्छत्यादिपदे प्रत्ययप्रतिपाद्यभावनाकृत इत्यर्थः। विशेष इति गुणविशेषः संयोगविभागात्मकः।

ननु संयोगविभागौ प्रति कारणत्वे परिस्पन्दस्य भावनातो धात्वर्थस्य निष्पत्तिः स्याद्धात्वर्थाच्च फलस्य। कथं च भावनानिष्पाद्यो धात्वर्थो भावनायामेव करणं धात्वर्थनिष्पाद्यं च स्वर्गादिभावनायां कर्मेति चोदयति—**नन्वेवमिति**।

स्वर्गे धात्वर्थे चान्तरा न धात्वर्थकरणं व्यापारमुपलभामह इति यदुक्तं तदुपजीवनेन चोद्यम्, तस्माद्धात्वर्थ एव भावनास्त्विति च चोद्यफलमिति दर्शयति—**स्वर्गमिति**। अस्यायमर्थः--यदि धात्वर्थकर्मकाद्व्यापाराद्व्यापारान्तरं स्यात्ततस्तस्य स्वर्गादेः कर्मत्वं भवेद्व्यापारान्तरनिष्पादितस्य धात्वर्थस्य करणत्वं, न तु तदुपलभ्यते इत्युक्तम्—

'न हि धात्वर्थकरणः फलभेदप्रभावनः।'

इत्यत्र। यश्चैको व्यापारो धात्वर्थक एव न तत्र स्वर्गयागयोः कर्मकरणभावः शक्योऽवगन्तुमित्यल तदभ्युपगमेन। धात्वर्थ एव फलोदयसमर्थतया भावनास्त्विति।

तत्र परिहारमाह—**उक्तोत्तरमिति**।

**फलेन साक्षात्करणे कर्त्तुश्चेष्टाफलार्थिनः।**
**करणत्वं प्रधानांशे तादूप्यं वा यतस्ततः॥**

**नेमे अन्यकर्मकरणविलक्षणे फलधात्वर्थयोः कर्मक-रणत्वे। दर्शितं हि परशुना छिनत्तीति न हि द्विधाभावे कर्तृव्यापृतिरपि तु करणे साधननियोगादिलक्षणत्वात्कर्तुः।**

**तत्रैव फलं नैष व्यापारस्तदभिसन्धानाद्**

'करण खलु सर्वत्र कर्तृव्यापारगोचरः।'

इत्यत्राभिहितम्। 'परशुना च्छिनत्ति' इत्यत्र न छेत्तृपरिस्पन्दः साक्षाद् द्विधाभवनगोचरः, अपि तु परशुगोचर एव; अथ च द्विधाभवनं प्रति परशोः करणत्वम्। नन्वेवं परिस्पन्दे छिनत्तौ करणत्व परशोर्न प्राप्नोति परशुगोचरत्वात्कर्मत्वापत्तिरेव स्यात्। श्रूयते च परशुना छिनत्तीति। तद्वदेव यागादेरपि फलोत्पत्तिकरणस्य प्रयोजकव्यापारे भावनाया करणत्वं न स्यात्। नैष दोषः। न हि परशूद्देशेन कर्तृव्यापारप्रवृत्तिः किन्तु द्विधाभावनफलोद्देशेन प्रवृत्तिः। तथा सति कर्तृपरिस्पन्देऽस्य परशोः करणत्वमिति परशुना छिनत्तीति प्रयोगाविरोधात्। यद्वा द्विधाभवनावच्छिन्न एव परिस्पन्दः छिनत्तीत्युच्यते न परिस्पन्दमात्रमित्याह—**तादूप्यमिति**। तादूप्यं छेदनरूपत्वं परिस्पन्दस्य **ततः** इति द्विधाभवनात्। यस्माद् द्विधाभवनावच्छिन्नः परिस्पन्दः छिनत्तीत्युच्यते तस्मात्तत्र परशोः करणत्व-मिति। ननु प्रयोजकव्यापारे भावनायां कारकाणा कर्मकर्तृकरणभावोऽ-भ्युपगम्यते। अतः कथमेतत् 'करणत्वं प्रधानांशे' इति? न हि द्विधाभवनं प्रयोजकव्यापारः प्रयोज्यव्यापारत्वात्। सत्यमेवमेतत्। अत्र साध्यत्वोद्देशाद् द्विधाभवने करणत्वमुक्तम्। वस्तुतस्तु तदवच्छिन्न एव कर्तृपरिस्पन्दे परशोः करणत्वम्।

अमुमेव श्लोकं विवृणोति—**नेमे इति**।

यदि च परशुगोचर एव कर्तृव्यापारो न द्विधाभवनगोचरः। कथं तर्ह्यविषयीकृतस्यासाधिका क्रिया द्विधाभवनस्य च साध्यत्वमित्याशङ्कयाह—

**अनन्यप्रकारत्वाच्च ।**

**इयांस्तु भेदः--धात्वर्थस्योत्पादनं नियोगः, परश्वादेस्तु सिद्धस्योद्यमनिपातनादिः ।**

**वृक्षादेश्च कर्मत्वं द्विधाभवने कर्तृत्वात् ।**

**तदर्थं परशुतिष्ठितं (?) निपातोद्यमनादिलक्षणं छिधाभवनं प्रति करणत्वम् ।**

**तच्च परशोः करणत्वं छिनत्तौ प्रधानांशापेक्षम् ।**

**ताद्रूप्यस्य तदधीनत्वात् । न ह्युद्यमननिपातनादि मात्रमसम्भवद्विधाभवनं छिनत्तीति निरूप्यते ।**

**तत्रैवेति** । किमिति परशुव्यवधानमाश्रीयत इत्याशङ्क्याह—**अनन्येति** ।

किं सर्वात्मना परशुधात्वर्थयोरवैलक्षण्यम् ? नेत्याह—**इयांस्त्विति** ।

परशुगोचरस्यापि कर्तृव्यापारस्य वृक्षादय एवोद्दिष्टत्वेन द्विधाभवन-कर्तृत्वेन च कर्माणि । यथोक्तम्—

'भवत्यर्थस्य यः कर्ता करोतेः कर्म जायते' इति ।

तदेतदाह—**वृक्षादेश्चेति** ।

'करणत्वं प्रधानांशे' इति यदुक्त तद्विवृणोति—**तदर्थमिति** ।

तदर्थमिति तत्कारणकं वृक्षादिकर्मत्वकारणकमित्यर्थः । एतदुक्तं भवति—यस्माद्वृक्षादयो द्विधाक्रियमाणत्वेन कर्माणि तस्माद् द्विधाभवनस्य परशुकरणकत्वम् । यदि परशुना वृक्षद्विधाभवनं न साध्यते नैव वृक्षादयो द्विधाक्रियमाणत्वेन कर्माणि भवेयुः । तदर्थमित्यत्रार्थशब्दः कारणवाची । **निपातोद्यमनादिलक्षणमिति** । निपातोद्यमननिमित्तक-मित्यर्थः । यद्वा तदर्थमिति वृक्षादिकर्मप्रयोजनं तच्छेषभूत तद्द्विधाभवनं प्रति करणत्वमिति छिनत्तौ करणत्वं कथमितिचेदत आह—**तच्चेति** ।

'ताद्रूप्यं वा यतस्ततः' इति यदुक्तं, तद्विवृणोति—**ताद्रूप्यस्येति** । एतदेव दर्शयति—**नहीति** ।

---

१ 'मात्रसंभ' इति खपुस्तके ।

**तस्मादिहापि धात्वर्थस्योत्पादकोऽनुग्राह्को वा कर्तृव्यापारः समुद्दिष्टफलभवनतया प्रतिलब्धभावनाव्यपदेशो धात्वर्थोपनिबद्धप्रधानांशताद्रूप्यफलकर्मको धात्वर्थकरणश्चेति न दोषः। न हि द्विधा भावयति परशुनेति परशुं द्विधाभवनं चान्तरेण कर्तृव्यापार एकोऽपरसाध्योऽपरसाधन उपलभ्यते। न च करणत्वं विरुद्धम्। प्रधानांशनिष्पत्तेस्तदधीनत्वात्। तथेहापि[3] फलभूतेः प्रधानक्रियापेक्षत्वात्कारकविभक्तिः विभागव्यवस्थायाश्च।**

**तथाहि।**

एव दृष्टान्तं व्याख्यायाधुना दार्ष्टान्तिक योजयति—**तस्मादिहेति।** धात्वर्थोपनिबद्धप्रधानांशताद्रूप्य इति धात्वर्थकरणकः प्रधानांशः फलभवन ताद्रूप्यं भावनारूपत्व यस्येति विग्रह । प्रधानाशनिमित्तकमपि ताद्रूप्य प्रधानांश इत्यभेदेनोपचरितम्। यद्वा, प्रधानांशे ताद्रूप्यं यस्येति गमकत्वाद्व्यधिकरणोऽपि समासः। अथवा, धात्वर्थोपनिबद्धश्चासौ कर्तृव्यापारः प्रधानाशताद्रूप्यश्चेति विग्रहः। अनेन ग्रन्थेन 'ताद्रूप्य वा यतस्तत' इत्यय पक्षो दर्शितः। एतदुक्त भवति—यद्यप्येकः कर्तृव्यापारः, स च धात्वर्थगोचरः,तथापि तस्य धात्वर्थकरणकत्व स्वर्गादिफलकर्मकत्वं चाविरुद्ध क्रियारूपत्वादिति। अमुमेवार्थं दृष्टान्तेन दर्शयति—**न हीति।** न हि परशुद्विधाभवनगोचराद्व्यतिरिक्तोऽपरसाध्योऽपरसाधनश्च व्यापार उपलभ्यते। अपर साध्यमपर साधनं यस्येति विग्रहः। परशुगोचरस्य व्यापारस्य यत्साध्य यच्च साधन तद्व्यतिरिक्तमित्यर्थः। न च परशुगोचर एकस्मिन्नेव कर्तृव्यापारे परशोः करणत्व वृक्षादेश्च कर्मत्वं विरुद्धमित्यर्थः। पुनरपि दार्ष्टान्तिके योजयति—**तथेहापीति।** न यागस्य कर्मत्वमित्यनुषङ्गः। एतदेव प्रपञ्चयति—**तथा हीति।** उखायामोदनं काष्ठैर्देवदत्तः पचेदित्येकस्मिन्नेव कर्तृव्यापारे

---

१ 'तस्मादपि' इति खपुस्तके। २ 'एकस्य साध्यः' इति कपुस्तके। 'एकसाध्य' इति खपुस्तके। ३ 'तथेहापि फलभूते' इति खपुस्तके नास्ति।

**प्रधानांशमुपादाय साधनान्येकवाक्यताम् ।**
**व्रजन्ति नान्यव्यापारो रूपतो ह्यन्यसाधनः ॥**

**तस्मादनुपालम्भो[1] व्यापारान्तरानुपलम्भादिति । यत्त्वात्मकर्तृकेषु[2] यजते इत्यादिष्वसम्भव इति । तत्र[3] केचित्—**

**भाष्ये यतेतेति गिरा प्रयत्नं प्रतिपेदिरे ।**
**अचेतने प्रयोगस्य प्राचुर्यान्नोपचारधीः ॥**

**तथा यतेत यथा किञ्चिद्भवतीति फल[4]भावनानुकूलः प्रयत्न एवाख्यातार्थो दर्शितः । अचेतने त्वाख्यात-**फलभवननिष्ठकाष्ठादयः करणत्वादिना संबध्यन्ते । न च तत्र व्यापारभेद उपलभ्यते काष्ठगोचर ओदनगोचरश्च । अपि त्वेक एव कर्तृव्यापारः । स तु रूपतः स्वभावतः फलोद्देशप्रवृत्तत्वात्काष्ठादिसाधनो न काष्ठादिकर्मकः । अन्यसाधन इत्यन्यत्साधनं निवर्तकं गुणरूप यस्येति विग्रहः । एतेन न व्यापारो दृश्यतेन्तरेति यदुक्तं दूषणं तन्निरस्तम् । अनन्तरोक्तमुपसंहरति—**तस्मादिति** । तदेवं धात्वर्थभावनयोर्लक्षणभेदो दर्शितः—संयोगविभागात्मको धात्वर्थः, पचति पठतीत्येवमादिषु स्पन्दात्मकश्च भाव इति । यस्त्वत्र पक्षे दूषणमुक्त—

भावः परिस्पन्द इति यजत्यादावसम्भवः । इति,

तन्निराकर्तुमनुभाषते—**यस्त्वित्यनेन** । एवमनुभाष्य परमतेन तावन्निराकर्त्तुमाह—**तत्र केचिदिति** ।

तथा यतेत यथा किञ्चिद् भवतीति भाष्यकारवचनात्प्रयत्न एवाख्यातार्थो गम्यते । स च यजेत जानातीत्येवमादिषु विद्यत एव । ननु चास्मिन्नपि पक्षे वायुश्चलति रथो गच्छति कूलम्पततीत्यादिषु प्रयत्नात्मव्यापाराभावादाख्यातप्रयोगो न स्यादित्याशङ्क्याह—**अचेतने इति** । वाय्वादिष्वचेतने-

---

१ 'तस्मादनुपलम्भोऽयम्' इति खपुस्तके । २ 'यत्तु आत्मकर्तृकेषु यजत्यादिषु तदभाव इति यजत्यादिष्वसम्भव [ ग्रन्थ ]' इति कखयोः क्रमेण पाठौ । ३ 'तत्र किञ्चित्' इति खपुस्तके । ४ गे 'फल' शब्दो नास्ति ।

**प्र[1]योग उपचारात् । प्रयोगप्राचुर्यात्तु नौपचारिकः प्रत्ययः । इदं तु समाधानं प्रसिद्धे तद्भावे स्यात् । न च प्रत्यये समाने हेत्वन्तरे चासति तत्प्रसिद्धिरस्ति । विपर्ययोपगमस्याप्यशक्यवारणत्वात् ।**

**उदासीनत्वविच्छेदसामान्यात्मा ततो मतः ।**
**करोत्य[2]र्थो द्वये चेह तद्रूपप्रत्ययोद्भवः ॥**

**औदासीन्यविच्छेदो हि करोत्यर्थः उदासीने क्रियाज्ञानाभावात् । [3]औदासीन्यप्रच्युतेश्च द्वैधमात्मनि प्रयत्नादन्यत्र रथा[4]दौ परिस्पन्दात् । तथाहि प्रयत्नवन्तं** स्वविद्यमानप्रयत्नारोपणाख्यातप्रयोग औपचारिकः । उपचारबुद्धिस्तु प्रयोगप्राचुर्यान्न जायते न मुख्यत्वात् । अमुमेव श्लोक विवृणोति—**तथेति** । 'औपचारिकः प्रत्ययः' इत्यस्यायमर्थः—औपचारिकोऽय प्रयोग इत्येवविधः प्रत्ययः प्रयोगप्राचुर्यान्न भवति । तदेतदौपचारिकत्वप्रतिपादके प्रमाणान्तरे असति न तदसिद्धेरप्रतिपत्तिसाधनमिति निराकर्तुमाह—**इदं त्विति** । सिद्धे औपचारिकत्वे तत्प्रतिपत्त्यभावोऽन्यथासिद्धः शक्यो दर्शयितुम् । न च देवदत्तो गच्छति वायुश्चलतीति समाने मुख्यप्रत्यये औपचारिकत्वप्रतिपादके प्रमाणान्तरे चासति तत्सिद्धिः । आस्तततामात्रेण चौपचारिकत्वाभ्युपगमे चेतन एवाख्यातप्रयोग औपचारिकोऽन्यत्राचेतने मुख्य इति विपर्ययावगमस्याशक्यवारणत्वादित्याह—**विपर्ययेति** । तस्माच्चेतनाचेतनयोर्यथा मुख्येनार्थेनार्थवदाख्यातं तथा वाच्यम् तच्चैव भवतीत्याह—**उदासीनेति** । औदासीन्यविच्छेदः करोत्यर्थः । स च प्रयत्ने परिस्पन्दे च गम्यते । तथाहि प्रयत्ने सत्यनुदासीनः सन् कुर्वन्नुपलभ्यते परिस्पन्दे च सति रथादिः । तेन प्रयत्नपरिस्पन्दयोरौदासीन्यविच्छेदसामान्यरूपयोराख्यातार्थत्वाच्चेतनाचेतनयोरर्थवदाख्यातमित्यर्थः । एतदेव प्रपञ्चयति—**औदासीन्येत्यादि** ।

---

१ गपुस्तके 'प्रयोग' शब्दो नास्ति । २ 'त्यर्थो द्वये' इति खपुस्तके । 'करोत्यर्थान्वये' गपुस्तके । ३ 'उदासीना प्रच्युतिश्च द्विधात्मा' इति गपुस्तके । ४ खपुस्तके 'रथादौ' इति नास्ति ।

ननु भावनासामान्य नाम क्रियात्वं करोत्यर्थः नौदासीन्यप्रध्वंसः। न चौदासीन्यविच्छेद एव क्रियात्वं प्रयत्नपरिस्पन्दयोस्तद्भेदेषु च करोति-करोतीतिभावाकारबुद्ध्युत्पत्तेः। अपि च प्राक् चासिद्धेः क्रियारूपाभ्यां प्रयत्नपरिस्पदाभ्यामौदासीन्यप्रध्वंसः क्रियते। तथा चायमेव वदति आत्मनि प्रयत्नादन्यत्र परिस्पन्दात्। न चाक्रियारूपाभ्यामेताभ्यामौदासीन्यविच्छेदः क्रियते पश्चात्तद्योगात्तयोः क्रियाबुद्धिरिति वाच्यम्। उत्पत्तिकाल एव क्रियाबुद्ध्युत्पत्तेः। करोतीतिबुद्धेरैन्द्रियकत्वात्। त्वत्पक्षे चातीतयोः प्रयत्नपरिस्पन्दयोरौदासीन्यविच्छेदसामान्यात्मकयोः क्रियात्मकत्वमिति न तत्र करोतीत्यैन्द्रियकः प्रत्ययः स्यात्। ननु च युगपदेवात्मस्वरूपाश्रये प्रयत्नौदासीन्यप्रच्युती सम्भवतः। रथादौ च परिस्पन्दौदासीन्यविच्छेदौ न तु प्रयत्नादेरौदासीन्यविच्छेदः। नैतत्सार, प्रयत्ननिरपेक्षात्मस्वरूपनिबन्ध-नत्वे चौदासीन्यप्रच्युतेः क्वचित्प्रयत्नाभावेऽप्यौदासीन्यप्रच्युतिः स्यात्। न हि परस्परनिरपेक्षयोः समानकारणयोः कार्ययोः साहित्ये किंचन प्रमाणमस्ति। तस्मात् प्रयत्नपरिस्पन्दाभ्यामेवौदासीन्यप्रच्युतिः क्रियेत। तेचोत्पद्यमानावेव क्रियाबुद्धिग्राह्यत्वेन क्रियारूपावित्युक्तम्। यद्यपि चैकं क्रियासामान्यलक्षण नास्ति तथापि प्रयत्नपरिस्पन्दावेव क्रियाज्ञानालम्बनम्। यथाऽक्षशब्दादौ भिन्ना एव विदेवनादयोऽक्षशब्दज्ञानालम्बनम्, तथात्रापीति न दोषः। अपि च यौगपद्येऽपि प्रयत्नपरिस्पन्दौ क्रियारूपावेव भवतो नाक्रियारूपौ तद्रूपबुद्ध्युत्पत्ते.। अपि च घटस्य क्रिया वर्तत इति नास्याय-मर्थो व्याख्यायते—'घटस्यौदासीन्यविच्छेदो वर्तत' इति। तस्मादन्य एव भावात्मकः प्रयत्नपरिस्पन्दादिरूपः क्रियाशब्दार्थः, अन्यश्चौदासीन्यवि-च्छेद इति वाक्यस्याभावात्मकोऽर्थः। अतो न विद्मः कथमौदासीन्य-विच्छेदः करोतेरर्थ इति। भट्टपादैश्चोक्तम् —

"अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम्।" इति।

भावरूप क्रियासामान्यं दर्शयाति। तस्मात्करोत्यर्थोपलक्षणमौदासीन्य-प्रच्युतिः। तदप्युक्तमौदासीन्यप्रच्युत्युपलक्ष्यमाणं चेति। ननु प्रयत्नपरि-स्पन्दमात्रभावनाभ्युपगमे लिङादेरचेतनात्मकत्वेन सर्वगतत्वेन च प्रयत्न-परिस्पन्दाभावे सति शब्दभावनाभ्युपगमो मीमांसकानां मिथ्यैव स्यात्।

तत्र केचिदाहुः बाढं मिथ्यैव । न हि लिङादेरचेतनस्य सतः स्वस्मिन् व्यापारोऽस्ति यं भावनाशब्दोऽभिनिविशेत। ननु प्रेरणास्ति। कुतः पुनरियं प्रेरणा प्रतीयते ? लिङादेरेवेति ब्रूमः। न हि स्वव्यापारस्य शब्दानभिधेयत्वात्। न हि स्वव्यापारं कश्चिच्छब्दो निवदति। न वा स्वव्यापारैः संबन्धग्रहणं सम्भवति प्राक शब्दादविद्यमानत्वेनाग्रहणात्। अव्यापाररूपप्रेरणाभ्युपगमे तु न शब्दभावनासिद्धिः प्रयोजकव्यापारस्य भावनात्वाभ्युपगमात् । न चाव्यापाररूपापि प्रेरणा नाम काचिदस्ति। ननु लिङादेः प्रेरणामवगच्छामः। न 'यजेत स्वर्गकामः' इति वाक्याद्धात्वर्थस्य श्रेयःसाधनत्वमात्राभ्युपगमात् । न प्रेरणा नामान्य काचिदवगम्यते। तस्माच्छब्दभावना नाम नास्त्येवेत्यवगम्यते। तद्द्वैविध्यमनुपपन्नम्। अभिधानलक्षणोप्यर्थप्रतिपत्तिकर्मकः शब्दव्यापारो न गम्यते । शब्दादेव तु निर्व्यापारादर्थावगमः। न च निर्व्यापारस्य कारकत्वं विरुद्धम्। काष्ठादेर्ज्वालादौ व्यापारान्तररहितस्यापि कर्तृत्वदर्शनात्। तस्मादर्थप्रतिपत्तिकर्मिका संबन्धग्रहणकरणिकोच्चारणेतिकर्तव्यतोपेता प्रयोजकशब्दव्यापारलक्षणाभिधा भावना नास्ति। तदेतदपेशलम्। प्रेरणात्मिका विशिष्टा [ता] वदर्थभावनावत्कर्तृसंख्यावच्च लिङादेः प्रतीयते। तत्र सभावनादौ सत्यपि लिङ्प्रयोगेन धात्वर्थस्य श्रेयःसाधनत्वमवगम्यते । सा चाभिधानवच्छब्दव्यापारः प्राक्शब्दात्सत्त्वे प्रमाणाभावात् । अतो न सदभिधानम्। शब्द एव करोत्यभिधत्ते च । न चाभिधानवच्छब्दव्यापारत्वादनभिधेयत्वं प्रतिपत्तिविरोधात् । अगृहीतसंबन्धोपि च लिङ् प्रेरणामभिधत्ते स्वार्थव्युत्पन्नसम्बन्धाद्धातोः परः प्रयुक्तः, किमत्र कुर्मः। अन्ये त्वाहुः—लिङादियुक्तवाक्यश्रवणसमनन्तर पुरुषप्रवृत्तिदर्शनादवगम्यते प्रवृत्तिहेतुभूतोऽर्थोऽनेन पुरुषेणास्माच्छब्दादवगत इति । न प्रवृत्तिहेतुत्वं लिङादेः सम्भवति सम्भावनादौ व्यभिचारात् । नापि फलस्य विधिमन्तरेण स्वर्गादेः फलत्वानवगमात् । विधिप्रमाणको हि स्वर्गयागयोः साध्यसाधनभावो न प्रत्यक्षादिप्रमाणकः। अत एवोक्तम्—" चोदनालक्षणोर्थो धर्मः " इति। तथा "औदुम्बरो यूपो भवत्यूर्जोवरुध्यै इत्यत्रोदुम्बरत्वोर्गवरोधयोः सम्बन्धे गम्यमानेऽपि विध्यभावान्न फलत्वमाश्रितम् । नाप्यर्थवादाना प्रवर्तकत्वं

**यतमानमात्मानमनुदासीनं कुर्वाणं व्यापारवन्तमवैति परिस्पन्दमानं चान्यम् । अतः प्रयत्नपरिस्पन्दयोरौदासीन्यविच्छेदसामान्यांशरूपयोस्तदवभासधीविषयत्वेन क्रियापदार्थत्वान्नात्मकर्तृकेषु तदभावः । तदुक्तम्—**

स्तुतिमात्रावगमात् । तदन्यथानुपपत्तिकल्पितविध्यभ्युपगमेपि विधिरेव प्रवृत्तिहेतुः स्यात् । तेनान्वयव्यतिरेकाभ्यां लिङर्थं प्रवृत्तिहेतुमवगच्छामः । स च प्रेरणात्मकत्वाद्विना प्रवृत्तिहेतुर्न भवतीति प्रेरणात्मिका साऽवगम्यते । कार्यात्मकविध्यर्थवादिनोप्यर्थात्प्रेरणैव प्रवृत्तिहेतुः । तत्र कार्यात्मकत्वं प्राङ्निराकृतत्वान्न संभवतीति प्रेरणात्मको लिङर्थ इत्युच्यते । तत्रैव पुरुषान्तरप्रवृत्तिदर्शनावगते प्रेरणात्मके विध्यर्थे लिङो व्युत्पत्तिः । तेन सामान्येन रूपेण प्रेरणाभिधेया विशेषरूपेण लिङादिकार्या । स विशेषो लक्षणया शब्देनावगम्यते । यथाभिधानशब्दोऽभिधानं सामान्यरूपेणाभिधत्ते विशेषरूपेण च करोतिम् । इदं त्वतिशौण्डीर्येणोपन्यस्तम्—प्रतीतिशरणास्त्वगृही सम्बन्ध एव लिङादिः प्रेरणाविशेषमभिधत्ते करोतीति च वदन्ति । तस्मादस्ति पुरुषप्रवृत्तिकर्मिका विधिज्ञानकरणिकार्थवादोत्पादिताविषयप्राशस्त्यज्ञानेतिकर्तव्यतोपेता लिङादिव्यापारः प्रेरणात्मिका शब्दभावना अभिधानलक्षणापि च देवदत्तादेरिव व्यापारः शब्दभावना । न चाभिधानं नास्तीति वक्तव्यम् । निर्व्यापारस्य काष्ठादेः प्रधानक्रियायामन्वयानुपलब्धेः स्वव्यापारे व्यापारान्तराभावेपि । तेनार्थप्रतिपत्तिलक्षणां प्रधानक्रियां निर्वर्तयञ्छब्दः काष्ठमिव विक्लित्तिं स्वव्यापारेण निर्वर्तयति इति गम्यते । अत एव शब्दोभिधत्ते इत्युच्यते । अन्यथा निष्क्रियस्यायमपि व्यपदेशो निर्निबन्धन एव स्यात् । प्रतिपत्तिस्तु प्रतिपत्तुः क्रिया नाभिधातुः । न हि शब्दोऽर्थं प्रतिपद्यत इत्युच्यते । तेनास्त्यभिधानलक्षणापि भावना । अंशत्रयं त्वस्याः प्रागेव दर्शितम् । तस्मादन्योप्यस्ति भावनाप्रकार इति द्वैविध्य युक्तम् । तदास्तां तावदिदं प्रकृतमनुसन्दध्मः । एवं तावत्क्वचित्परिस्पन्दः क्वचित्प्रयत्नः क्वचित्प्रेरणा भावनेत्युक्तम् । अथ परिस्पन्दश्चेत्-

न परिस्पन्द एवैकः क्रिया [1]नः कणभोजिवत्। इति।

अथापि परिस्पन्देन वः प्रयोजनम्, अस्त्येवासौ।

मनोभूतपरिस्पन्द आत्मनस्तत्[2]प्रयत्नजः।

विक्लित्त्यादिर्यथा तस्मिन् साधनोपनिपाततः॥

आत्ममनःसंयोगाद्विज्ञानसङ्कल्पविशेषा[3]दुत्पत्तेस्तन्निबन्धनमात्मसमवेतादृष्टप्रयत्नहेतुकं मनसि कर्म स्पन्दरूपमुपेयते। आत्मप्रयत्नापेक्षश्च भूतेषु द्रव्योपादानादिलक्षणः परिस्पन्दः। उभयोरप्यसावात्मनः तदधीनत्वाद्विक्लित्त्यादिवत्।

तथाहि।

विक्लित्तिभिदाच्छिदास्तन्दुलादिसमवायिन्यो देवदत्ते असमवेता अपि देवदत्तस्य क्रियास्तासु तस्य कर्तृत्वात्। प्रधानक्रियायां सर्वकार[4]कोपनिपातात्। एकवाक्यत्वात्। न हि स्वव्यापारविषयः करणादिभावः

चेतसोपि सर्वत्र दर्शयितु शक्य इत्याह—अथापीति। मनोगतो यः परिस्पन्दोऽसावात्मन एव द्रष्टव्यः तदधीनत्वान्मनस इत्यर्थः। प्रादेशिकत्वाच्च सम्भवति मनसः परिस्पन्दः। विषयाद्विषयान्तरं सञ्चरन्मनः स्पन्दमानं लक्ष्यते। चञ्चलं मन इति सर्वजनप्रसिद्धम्। तेन मनसः स्पन्दमानत्वादात्मनोपि तद्गतेन स्पन्दवत्त्वेति केचित्। अत्रैव दृष्टान्तमाह—विक्लित्त्यादिरिति। श्लोकं व्याचष्टे—आत्मन इति एतदेव प्रपञ्चयति—तथाहीति। कथ तत्क्रिया इत्यपेक्षितेसत्याह—प्रधानेति। विक्लित्त्यादीनामुद्दिष्टत्वेन साध्यभूताना प्रधानक्रियात्वात्तत्रैव साधनत्वेन सर्वकारकाण्युपनिपतन्ति। तेनान्यसमवेता अपि विक्लित्त्यादयो देवदत्तसाध्यत्वेन तत्क्रियाः। सर्वकारकोपनिपात एवोपपत्तिमाह—एकेति। यदि प्रधानक्रियाया

१ 'न' इति कपुस्तके। २ 'तुल्ययत्नज.' इति खपुस्तके। ३ 'विशेषोत्पत्त' इति खपुस्तके।

**कारकाणाम् । तेषां भेदादेकवाक्यतानुपपत्तेः । एवञ्च कर्तृविनियोज्यतया सर्वसाधनानां तद्व्यापारः कर्तुरिति तेषां भावनान्तर्गतिः । तन्मुखेन च साधनताप्युपपन्ना ।**
सर्वकारकोपनिपातो न स्यात्ततस्तत्कर्मणि पाके देवदत्तादिकर्तृव्यापारसम्बन्धाभावादुखायामोदनं काष्ठैर्देवदत्तः पचेदिति कारकपदानां भिन्नार्थत्वेनैकवाक्यत्वं न स्यात् । विक्लित्त्यर्थानि सन्ति काष्ठादीनि विक्लित्तिफलकेन प्रयोजकव्यापारेण सम्बध्यते । एवं तदुत्पादनात्मकत्वेनैकवाक्यत्वं भवतीत्यर्थः । ननु यत्र कारकभावस्तत्र काष्ठादीनामुपनिपातो युज्यते । स्वव्यापारे च ज्वलनादावेव कारकभावो न प्रधानक्रियायां विक्लित्तौ नापि तत्कर्मणि प्रयोजकव्यापार इत्याशङ्क्याह—**न हीति** । करणादिभेदेन काष्ठादीन्युपात्तानि । न च स्वव्यापारे ज्वलनादौ करणादिभावः सम्भवति । सर्वेषा तत्र कर्तृत्वात् । अतः फलवत्प्रयोजकव्यापारोपनिपातः करणादीनाम् । यदि तु स्वव्यापारपर्यवसितान्येव काष्ठादीनि करणादिपदैरभिधीयन्ते ततस्तेषां भिन्नार्थत्वेनैकवाक्यत्वं न स्यादित्याह—**तेषामिति** । तस्मात्प्रधानक्रियाया सर्वकारकोपनिपातात् विक्लित्त्यादयस्तन्दुलादिसमवायिन्योऽपि देवदत्तक्रियाः । एवञ्च कर्तृविनियोज्यतया करणादीना तत्समवेताः परिस्पन्दादयः प्रयोजकादिक्रियाः विक्लित्तिरिव देवदत्तस्य । अतः करणादिपरिस्पन्दादयोपि भावनान्तर्गता इत्याह—**एवञ्चेति** । ननु काष्ठादीनां प्रधानक्रियोपनिपाते तत्फलप्रयोजकव्यापारोपनिपाते वा तत्सम्बन्धाविशेषात्कथमिव करणादिभावेन कारकवैचित्र्यमित्याशङ्क्याह—**तन्मुखेनेति** । विचित्रावान्तरव्यापारमुखेन कारकवैचित्र्यमुपपन्नमित्यर्थः । ननु विक्लित्त्यादयोपि न क्रियास्तन्दुलकुसूलकाष्ठावयवसंयोगविभागावेव धात्वर्थ इत्युक्तम् । तौ च नैव क्रियात्मकाविति वक्ष्यति परोपाधिक्रियात्मकाविति वक्ष्यति ।

'परोपाधिक्रियारूपो ज्ञायते न क्रियान्तरम् ।'

इत्यत्र । तथा विक्लिद्यन्तीत्यत्र तन्दुलावयवविभागो धात्वर्थः तन्दुलावयवपरिस्पन्दस्तु प्रत्ययार्थ इति वक्ष्यति ।

---

१ 'हेतु भेदा' इति खपुस्तके ।

**परोपाधिक्रियारूपात्[1] ज्ञायते न क्रियान्तरम् ।**
**सम्बन्धादेव साध्यत्वमतः करणसङ्गतिः ॥**

**धात्वर्थस्य खलु भावनामनुरञ्जयतस्तद्विषयताप्रतीतेः। तस्यां प्रतीत्यां तत्परामर्शकृतं[2] तदन्तर्गतस्य भाव-नात्वं[3] क्रियात्वमिति कुतः क्रियाद्वयप्रत्ययः? न हि जाति-गुणोपरक्तेषु द्रव्येषु तद्रूपभेदः । भावनासंबन्धितयैव च साध्यता न तत्सम्बन्धं[4] विहन्ति । तदभावे तस्या[5]**

'प्रधानं व्यापृतिर्यस्य धात्वर्थं प्रसमीक्ष्यते ।'

इत्यत्र । अतः कथं विक्लित्त्यादय· क्रियात्वेनोक्ताः ? क्रियात्वे च क्रियमाणमन्वेष्टव्यमिति । अत्रोच्यते' विक्लित्त्यादिशब्दास्तन्दुलाद्यवयव-परिस्पन्दपराः प्रयुक्ता न तद्विभागपराः । परिस्पन्दश्च क्रियैव क्रियमाण-श्चावयवविभागोस्ति । यद्वा, येषा क्रियावचनो धातुरिति मतं तदभिप्रायेणे-तदुक्तमिति द्रष्टव्यम् । प्रधानत्वं चोदनावस्थानुबन्धित्वेनोक्तम् । यत्पुनरिदमुक्तम्—

'धातुप्रत्यययोर्वाच्ये प्रतीयेते न हि क्रिये ।'

इति, तत्राप्याह—**परोपाधीति** । काष्ठै. पचतीत्यत्र तन्दुलावयव-विभागतत्संयोगशैथिल्यात्मनः पाकधात्वर्थस्य स्वयमक्रियात्मनो भावना-संस्पर्शकृत क्रियात्मत्वम् । अतश्च धात्वर्थस्योपाधिना क्रियारूपत्वान्न क्रियाद्वयप्रतीतिप्रसङ्गो दोष इत्यर्थ । ननु देवदत्तो गच्छतीत्यत्र प्रयत्न-संस्पर्शकृतसाध्यत्वस्य परिस्पन्दस्य क्रियात्वमिष्टम् । तद्वत्पाकस्यापि भविष्यति । नैतत् । परिस्पन्दस्य व्यापारात्मकस्यैव प्रयत्नात्सिद्धिरन्य-रूपस्याप्रतीतेः । पाकादेस्तु संयोगविभागात्मनो निर्ज्ञानरूपान्तरस्यान्य-संस्पर्शकृतसाध्यत्वस्य सत्यपि परिस्पन्दसाधर्म्ये तत्तद्धिक्रियात्वम् । औपचारिकत्व एव कारणमाह—**सम्बन्धादेवेति** । यदि क्रियासंबन्ध-

---

१ 'रूपो' इति खपुस्तके । २ 'यताप्रतीत्यातत्प' इति कपुस्तके । ३. कपुस्तके 'भावनात्व' नास्ति । ४ 'तत्सम्बन्धि' इति खपुस्तके । ५ 'तस्याप्य' इति खपुस्तके ।

**अप्यभावात् । अतश्च करणसम्बन्धोऽप्युपपन्नः । भावनाविषयताम्[1]उपयतः करणभावयोगात्[2] । साध्यं[3]ताप्रतीतेः क्रियारूपापत्तेः ।**

**प्रधानं[4] व्यापृतिर्यस्य धात्वर्थे प्रसमीक्ष्यते ।**

**स कर्तातः पचन्तीति विक्लियन्तीति भिद्यते ॥**

**न[5] खल्वगुणतो धातुनाभिधीयमानव्यापारः कर्ता[6] येन प्रत्ययार्थः पर्यनुयुज्येत अपि तु धात्वर्थं प्रत्यभिसंहितप्रधानव्यापारः । सर्वत्र[7] धात्वर्थस्य कर्तृव्यापारमभिधेयं लक्ष्यं च प्रति विशेषणत्वात् । तेन विक्लियन्तीति**[8] निरपेक्षः पाकादिधात्वर्थः सिद्ध्येत्सिद्धश्च कालान्तरं न तिष्ठेत्ततः प्रयत्नवदेव क्रियात्व परिस्पन्दवदेव वा भवेत् । न त्वेतदस्ति क्रियामन्तरेणासिद्धेः कालान्तरस्थायित्वाच्चेत्यभिप्रायः । अनेन चाक्रियात्मकधात्वर्थप्रतिपादनेन ।

'सम्बन्धो नावकल्पेत द्वयोः साध्याभिधायिनोः ।'

इति यदुक्त–तदपि निराकृतमिति द्रष्टव्यम् । करणाभिधायिक्रियाभिधायिनोः समभिव्याहारोपपत्तेः । यत्तु करणत्वे धात्वर्थस्य भावेनापि धात्वर्थे काष्ठैरिति समागम इति चोदितं तत्रापि परिहारमाह—**अतः करणेति** । यस्मात् साध्यरूपो धात्वर्थः करणमतस्तस्य काष्ठादिकरणान्तरसम्बन्ध इत्यर्थः । ननु क्रियया कारकं सम्बध्यते न साध्यमात्रेण । सत्यम्-अत्रापि पाककर्मिकया भावनयैव करणं सम्बध्यते क्रियागर्भः काष्ठपाकयोः सम्बन्धः । एतदुक्तम्-एकैव भावना उभयकर्मिका उद्देशादोदनकर्मिका व्याप्तेः पाककर्मिका । अनीप्सिततमस्यापि कर्मत्वस्मरणात् । न चौदनकर्मिकाया यागः करणम् । धात्वर्थकर्मिकाया तु काष्ठम् । उभयकर्मिकापि च प्रत्ययेनैवोपात्तेति नार्थाक्षिप्तभावनाद्वारकसम्बन्धनिबन्धनो मृद्घटवद्व्यवहितसम्बन्धावगमप्रसङ्गदोषः । तेन काष्ठैरोदनं पचतीत्ययमर्थः—

---

१ 'मनुपयत' इति खपुस्तके । २ 'साध्यभावप्र' इति खपुस्तके । ३ 'करणतायोगात्' इति खपुस्तके । ४ 'धानव्या' इति खपुस्तके । ५ 'न वै अगुण' इति खपुस्तके । ६ 'कर्तेति' इति खपुस्तके । ७ 'सर्वधात्वर्थस्य व्यापारं लब्धुमभिधेयं च प्रति' इति खपुस्तके । ८ 'विक्लिद्यन्तित' इति खपुस्तके ।

**तन्दुलव्यापारस्य ज्वलनाभिघातजन्मनोऽवयवाश्रितस्य [1]स्थाल्युदकाधिकरणतन्दुलभ्रमणात्मनो वा प्रधानभूतस्याभिधानात्पचन्तीति देवदत्त[2]व्यापाराभिधानाद[3]र्थभेदः कर्तृभेदश्च सिध्यतीति न प्रत्ययार्थपर्यनुयोगावकाशः । कथम्पुनः [4]पचिना तुल्यार्थाद्विक्लिदेः परेण प्रत्ययेन तन्दुलव्यापार एव विवक्ष्यते न देवदत्तव्यापारः । [5]प्रकृतीनां रूपभेदात्तुल्यार्थत्वेऽपि [6]प्रत्ययस्य स्वार्थे शक्तिभेदात् ।**

काष्ठान्वितेन पाकेनौदनं भावयतीति । नन्वेकस्या भावनायां कथमेकस्य गुणत्वं प्रधानत्वञ्च शब्दादवगम्यते ? नैष दोषः गुणत्वमेव शाब्दं कर्मत्व तु वास्तवम् । अयमेव तर्हि शब्दार्थः प्राप्नोति पाकेनौदन भावयतीति न पाकं काष्ठैरिति । तथा सति काष्ठानामनङ्गत्वप्रसङ्गः । उच्यते काष्ठानामपि तावदोदनकर्मिकयैव भावनया सम्बन्धः । स तु करणान्तरावरोधान्न घटत इति सैव पश्चात्पाककर्मिका सती करणान्तरसम्बन्ध प्रतच्छिति । तदुक्तम्—

'अनेकगुणजात्यादिकारकार्थानुरञ्जिता ।' इति ।

यद्वा, काष्ठवता पाकेनौदन भावयतीति मत्वर्थलक्षणा द्रष्टव्या । अमुमेव श्लोकं विवृणोति—**धात्वर्थस्येति** । अत्रैव दृष्टान्तमाह—**न हीति** । किम्पुनरत्रोदाहरणम् । न तावल्लाक्षारक्तः स्फटिकः तस्य मिथ्यात्वाद्धात्वर्थसाध्यत्वस्य च सत्यत्वात् । समो हि दृष्टान्तो भवति न विषमः । नापि शुक्लोपरक्तः पटः द्रव्यगुणयोरभेदेन स्वत एव रक्तो यतः । नापि कुसुम्भरक्तः पटः तद्रागस्य कुसुम्भावयववृत्तित्वात् । नैतद्युक्तम् अस्ति हि कथञ्चिद्द्रव्यगुणयोर्भेदस्तेन शुक्लयोगात्सोऽपि शुक्लः । वैशेषिकाभिप्रायेण चैतदुक्तमिति द्रष्टव्यम् । कुसुम्भरक्तस्य च पटस्य संयुक्तसमवायेन रागयोगः

१ 'स्थाल्युदरानुसरणात्मनो वा' इति खपुस्तके । २ 'व्यापारस्याभि' इति खपुस्तके । ३ 'दर्थे भेदकः (तः)' इति खपुस्तके । ४ 'नस्तुल्यार्थत्वात्पचिना विक्लिदेः' इति खपुस्तके । ५ 'प्रकृती रू' इति खपुस्तके । ६ 'प्रत्ययस्यार्थे' इति खपुस्तके ।

**भार्या दारा जलान्यपि एकार्थत्वेपि दृश्यते ।**
**प्रकृते रूपभेदेन प्रत्ययार्थो विशेषवान् ।**

**जलानीति प्रकृत्यर्थसमवायि तदेकार्थसमवायि वा बहुत्वं बहुवचनस्यार्थः तथा भार्या इति । आपो दारा इति तु प्रकृत्यर्थावयवसमवायि तदाश्रयैकार्थसम-**
सम्भवतीत्यनवद्यम् । सम्बन्धादेव साध्यत्वमित्यस्य विवरणं अतः करण-सङ्गतिरित्यस्य विवरणम् धात्वर्थस्य भावनाविषयतामुपयतः कर्मत्वयोगात्काष्ठस्य करणतया योगात् । कथमेवं करणत्वयोगः काष्ठस्येति चेदत आह—**साध्यतेति** । क्रियया कारक सम्बध्यते । धात्वर्थोऽपि च साध्यत्वेन प्रतीयमानः क्रियारूप एवेति कारकसम्बन्ध भजते । ननु च साध्येनाप्य-क्रियात्मना न कारकं सम्बध्यत इत्युक्तम् । नैष दोषः क्रियारूपापत्तेरित्यनेन धात्वर्थस्य साध्यत्वमुक्तम् । साध्यश्च साधनसम्बन्धमर्हति । स तु साक्षान्न घटत इति क्रियागर्भोऽस्य भविष्यति । यत्पुनः पूर्वपक्षेऽभिहित—

'विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्पते ।'

इति, तत्र परिहारमाह—**प्रधानमिति** । विक्लिद्यन्तीत्यत्र तन्दुला-वयवपरिस्पन्दः स्थाल्युदकाधिकरण वा तन्दुलपरिभ्रमणं प्रत्ययेनोच्यते विक्लित्तिधात्वर्थं प्रति प्रधानभूतम् । पचन्तीत्यत्र देवदत्तादिव्यापारः पाकं प्रति प्रधानभूतः पचन्तीतिशब्दाद्विक्लिद्यन्ति इत्यय शब्दोऽर्थभेदेन भिद्यत इति ग्रन्थयोजना । अमुमेव श्लोक विवृणोति—**न खल्विति** । धात्वर्थं प्रसमीक्ष्यत इति यदुक्त तत्र कारणमाह—**सर्वत्रेति** । पचन्तीत्यत्राभिधेयं प्रति विशेषणत्वं का क्रिया पाक इत्यत्र लक्ष्य प्रति । एतदुक्तं भवति—अभिधीयमानो लक्ष्यमाणश्च कर्तृव्यापारः सर्वत्र धात्वर्थविशिष्टः प्रतीयते । तेन धात्वर्थं प्रति प्राधान्यमुपपन्न कर्तृव्यापारस्य । यत एवमुक्त तेनेदमित्याह—**तेनेति** । ज्वलनाभिघातजन्मन इति ज्वलनाभिहतास्तन्दुलावयवा जनका आश्रयश्च यस्य स तथोक्तः । अतोऽर्थभेद इति प्रत्यययोरर्थभेदः । धात्वर्थविधेयत्वात्कर्तृव्यापारस्य । सति च तस्मिन् कः प्रत्ययार्थपर्यनुयोगा-वकाश इति । ननु च विक्लिद्यतिपचत्योस्तन्दुलावयवसंयोगशैथिल्यविभा-गवचनत्वे सति कथमिव विक्लिद्यतिपरः प्रत्ययस्तन्दुलावयवस्थपरिस्पन्द-माह । कथञ्च पचिपरो देवदत्तादिव्यापारमिति चोदयति—**कथं पुनरिति** ।

**वापि। प्रकृतीनां रूपभेदात्तदपेक्षत्वात्प्रत्ययस्याभिधान-शक्तेः। तथेहापि पचिपरो धात्वर्थैकार्थसमवायिनं व्यापारं कर्मकर्तृविषयः प्रत्यय आह। भिन्नाश्रयं वान्यत्र। विक्लिदिपरस्तु प्रकृत्यर्थैकार्थसमवायिनमित्यनवद्यम्।**

तत्र परिहारमाह—**प्रकृतीति।**

भार्यादारशब्दयोर्जलापशब्दयोश्च तुल्यार्थत्वेऽपि सति तत्पर बहुवचनमेकं विचित्रमर्थमतिदधद् दृश्यत इत्यर्थः। एतदेव विवृणोति—**जलानीति।** प्रकृत्यर्थसमवायीति व्यक्तिवाच्यत्वाभिप्रायेण। यत्परः शब्दः स शब्दार्थः इत्येव वोक्तम्। तदेकार्थसमवायि वेत्याकृतिवाच्यत्वाभिप्रायेण। यथोक्तम्—

'कपिञ्जलादिजातेस्तु प्रतीतिर्व्यक्तिसङ्ख्यया' इति।

येषां जलस्त्रीव्यक्तय एवाप्दारप्रातिपदिकार्थ इति दर्शनं तेषां प्रकृत्यर्थावयवसमवायित्वं द्रष्टव्यम्। यदा त्वाकृतिप्रातिपदिकार्थत्वमाश्रित्य बहुषु जलव्यक्तिषु दारव्यक्तिषु वा प्रयुज्यते तदा त्वयमर्थ इत्याह—तदाश्रयैकार्थसमवायि वेति। जातिरूपप्रकृत्यर्थाश्रयव्यक्त्येकार्थसमवायीत्यर्थः। व्यक्त्या सहैकार्थसमवायो द्रष्टव्यः। यद्वा तदिति प्रकृत्यर्थवाचोयुक्तिनिर्दिष्टा व्यक्तिः परामृश्यते बुद्धिस्थत्वात्। अथवा तदित्यवयवपरामर्शः। स आश्रयश्चासावेकोऽर्थश्चावयवरूप इति विग्रहः। तस्मिन्समवायो यस्य तत्तदाश्रयैकार्थसमवायि। कथमेतत्सर्वं कल्प्यत इत्यपेक्षिते सत्याह—**प्रकृतीनामिति।** एवं दृष्टान्तं व्याख्यायाधुना दार्ष्टान्तिके योजयति—**तथेहापीति।** पच्यन्ते तन्दुलाः स्वयमेवेति योऽयं कर्मकर्तरि प्रत्ययः स धात्वर्थैकार्थसमवायिनं व्यापारमाह। येष्वेव तन्दुलेषु धात्वर्थः पाकः समवेतः तेष्वेव तन्दुलेषु परिस्पन्द इत्येकार्थसमवायः एतदपि पूर्वमुदाहरणत्वेनोपन्यस्तमिति द्रष्टव्यम्। पचतीत्यत्र शुद्धकर्तृविषयः प्रत्ययो देवदत्ताश्रयं धात्वर्थपाकव्यधिकरणं व्यापारमाहेत्याह—**भिन्नाश्रयं वेति।** तदनेन पचिपरस्य प्रत्ययस्य पचिप्रकृतिवशेनार्थभेदो दर्शितः। इदानीं विक्लिदिपरस्यापि प्रकृतिवशेनैवार्थभेदं दर्शयति—**विक्लिदीति।**

---

१ 'दपेक्षित्वा' इति खपुस्तके। २ 'प्रत्ययः' इति खपुस्तके।
३ 'भिन्नाश्रयं चेत्यत्र' इति खपुस्तके।

**अग्निं चिनुत इत्यत्र स्वं यज्ञं यजतीति च ।**
**दर्शनात्कर्मयोगस्य नाभावस्तदभावतः ॥**

**धात्वर्थस्य हि चयनस्येष्टकाः स्थलं वा[1] । अव्यवधानात्कर्म न व्यापारान्तर[2]विधीयमानो व्यभिचार्यग्निः । स तु भावनाकर्म । अग्निशब्दश्च न स्थलवचनोऽपि तु ज्वलनवचनः । एवं ह्युक्तम् "अत्र ह्येष प्रसिद्धः" इति भाष्यकारेण । स्वं यज्ञं यजतीति तु[3] न भावनातोऽन्यत्र**

यत्पुनरिदमुक्तं कर्मणा च करोत्यर्थो व्याप्त इति । अव्यापकत्वेनात्रापि दूषणमाह—**अग्निमित्यादिना** । ननु च "अग्निं चिनुते" इत्यत्र चयनकर्मत्वादग्नेर्न भावनाकर्मत्वमतश्च कर्माभावेन भावनाभाव इत्याशङ्क्याह—**धात्वर्थस्येति** । चयनस्य चीयमानं कर्म । इष्टकाश्च चीयन्ते नाग्निः । तेनेष्टकाकर्मकञ्चयनं स्थलकर्मकं वा । स्थलस्य चयनसाध्यत्वात् । ननु चेष्टकासयोगात्मनश्चयनस्याक्रियात्वात्कर्मसम्बन्धो न घटते । नैष दोषः । चयनमिहेष्टकानामुपर्युपरि स्थापनं नाम पुरुषपरिस्पन्दोऽभिप्रेतः । स च क्रियात्मकत्वात्कर्मणा युज्यत एवाऽव्यवधानादिति चयनप्रतीष्टकास्थलयोरैक्यव्यापारान्तरेणाव्यवहितत्वात्कर्मता युक्ता न त्वग्नेः संस्कारदेशप्रकृतस्थलविषयप्रयत्नव्यवहितत्वात् । अग्निमन्तरेणापि च चीयमानमात्रापेक्षतया चयनस्य सिद्धेः । न त्वग्न्यपेक्षास्ति । दृश्यते च "अग्निं चिनुत" इत्यत्राग्नेः कर्मत्वमतो भावनाकर्मत्वाध्यवसायान्न कर्माभावात्तदभावः । ननु चाग्निं चिनुत इत्यस्यायमर्थोऽवगम्यते—चयनेनाग्निं कुरुत इति । चयनेन च स्थलं कुरुते । अतः स्थलवचनमेवायमग्निशब्दः स चयनकार्य एवेत्याशङ्क्याह—**अग्नीति** । कस्मादित्याह—**एवं हीति** । भाष्यकारेण लोकप्रसिद्धिमालोच्यैवमुक्तम्—"अत्र ज्वलनेऽग्निशब्दः प्रसिद्धः" इति । स्वयज्ञस्य तु भावनाव्यतिरेकेणान्यत्र कर्मत्वं न भवतीत्युक्तम् ।

'तदेव तस्य करणं न वै कर्मावकल्पते ।'

इत्यत्रेत्याह—**स्वं यज्ञमिति** । महाभाष्यकारेणापि चैकस्य तस्य

---

१ 'खपुस्तके 'वा' शब्दो नास्ति । २ 'न्तरव्यवधी' इति खपुस्तके । ३ 'तु' शब्दो गपुस्तके नास्ति ।

**कर्मत्वमिति दर्शितम्। तथा महाभाष्ये कर्मद्वयसम्बन्धो विक्लित्तेर्भावनाभेदेनैव दर्शितः इह तावत्तन्दुलानोदनं पचतीति। अर्थः पचिः तन्दुलान् विक्लेदयन् ओदनं निर्वर्तयति। (यद्यपि अर्थः पचिरित्युक्तम्। द्वौ तावद्व्यापारौ कर्मान्वयगोचरौ दर्शितौ, तत्रौदनं निर्वर्तयतीति यथा प्रत्ययार्थस्तथा प्रतिपादितम्।)**

कर्मद्वयसम्बन्धो दर्शित इत्याह— **तथेति।** तथेहापीष्टकाकर्मकचयनकरणकं प्रयत्नकार्यत्वमग्नेश्चयनस्याग्निसंस्कारार्थत्वात्। न व्यापारान्तरव्यवधीयमानो व्यभिचार्यग्निरित्यस्यार्थः। व्यापारान्तरव्यवधीयमानत्वेन तत्कर्मणोऽग्नेश्चयनव्यभिचारिणो न चयनकर्मतेति। तुल्यार्थत्वं भावयतिभवतीति यदुक्तं तत्र परिहारमाह—**प्रयोजकेति।** एतदेव विवृणोति—**स्वव्यापारे इति।** भावयेद् घट कुम्भकार इति स्वव्यापारे कुम्भकारो नियुज्यते। तस्य च घटादि कर्तृव्यापारविषय घटकरणं स्वव्यापार इति स एव णिचो विषय इति प्रयोजकव्यापारो णिजर्थः। भवतीत्याख्याताद्भवनधात्वर्थविषयो घटकर्तृव्यापार इत्यतुल्यार्थत्वं भवतिभावयतिशब्दयोः। एवञ्च कृत्वा घटो भवतीति न प्रयोगः प्रसज्यते कः पुनरत्र धात्वर्थव्यतिरिक्तः कर्तृव्यापारो भावना? । न तावत्परिस्पन्दः, असिद्धस्य घटादेः परिस्पन्दाभावात्। नापि प्रयत्नोऽनात्मत्वात्। नैष दोषः। वस्तुतोऽभावेऽपि शब्दात्प्रतीतेः। अथवा घटावयवाः सिद्धभवनाः प्रयोजकाः भवनव्यापृताश्च प्रयोज्याः सिद्धभवनानामसिद्धभवनावयववर्तिना भवनेन घटो भाव्यः। सिद्धभावनानां प्रयोजकव्यापारो भावनेत्युच्यते। एतदुक्तम्भवति— असिद्धभवनावयवभवनं करणं भवन्तश्च घटावयवा भाव्याः सिद्धभवनवर्तिसामान्यं भावना। तदुक्तम्—

'अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावना।
अन्यत्राशेषभावात्तु न तथा सा प्रकाशते॥' इति॥

---

१ गपुस्तके 'सम्बन्धाद् विक्लित्तेर्भा' इति, 'सम्बन्धो विक्लित्तिभावनाभेदेनन निर्वर्तयतीति' इति कपुस्तके। २ कंसान्तर्गतो ग्रन्थो गपुस्तक एव वर्तते।

**प्रयोजकक्रियामाहुः कर्तृव्यापारगोचराम् ।**
**कर्तृव्यापारविषयो धातोरर्थो विवक्ष्यते ॥**

**स्वव्यापारे[1] सर्वस्य नियोगात्कर्तृव्यापारविषयः प्रेरणादिप्रयोजककर्तृव्यापारो णिजर्थः । धात्वर्थविषयः कर्तृव्यापारस्तिङर्थ इति न भवति[2]भावयत्योस्तुल्यार्थत्वमिति ।**

**तदेवं[3] भावनार्थत्वादाख्यातप्रत्ययस्य हि ।**
**यागेन भावयेत्स्वर्गमित्यर्थः शब्दनिर्मितः[4] ॥**

भवनधात्वर्थविषयत्वेऽपि च प्रत्ययस्य भावयतिशब्दादर्थभेदः सिध्यतीति नातीव भवनव्यतिरिक्तकर्तृव्यापारेऽभिनिवेष्टव्यम् । तदेवमुक्तेन प्रकारेण यागादिव्यतिरिक्ताया भावनाया शाब्द एवायमर्थे न काल्पनिक इत्याह— **तदेवमिति** । तदनेन भावनाया वाक्यार्थत्वं दर्शितम् इद तिवह वक्तव्यं-फलमेव वाक्यार्थः कस्मान्न भवति ? तद्धि कर्तव्यमभिलषितत्वेन च प्रधानम् । कार्यप्रधानभूतार्थप्रतिपादनपरञ्च वाक्यम् । उपात्त चैतत्स्वर्ग-कामपदेन। नैतत्सारम् । विधेयप्रयोजन हि वाक्य विधायकपदप्रधानत्वात् । तथाहि यत्रापि न श्रूयत तत्रापि कल्पते । फल च न विधीयते लिप्सात एव पुरुषस्य प्रवृत्तत्वात् । प्रवर्तकश्च विधिर्नान्यरूपः । तेन यत्र पुरुषः प्रवर्तते स विधेयः । न च फले पुरुष प्रवर्तते इत्यविधेयत्वम् । ननु यागेन स्वर्गं भावयेदिति फलमेव विधीयमानमुपलभ्यते । नेय वचनव्यक्तिः यागेन स्वर्गं कुर्यादिति, किन्तर्हि यः स्वर्गं कर्तुमिच्छेत् स यागेन कुर्यादिति । तेनानुवाद्यः स्वर्गो न विधेयः । धात्वर्थस्तर्हि वाक्यार्थो भवतु स विधेयः कर्तुश्च तत्र न लिप्सा अत. प्रवृत्तिः सम्भवति स्वयमपुरुषार्थत्वात् । तस्मादयमेव वाक्यार्थः—'स्वर्गकामो यागं कुर्यात्' इति । तदेतदपेशलम् । तथाहि । धात्वर्थसाध्यत्वप्रतिपादनमात्रपर्यवसितो वा विधिः स्यात्तन्मुखेनो-पायत्वप्रतिपादनपरो वा । तत्र पूर्वस्मिन्पक्षे फलानन्वयः । स्वर्गयागयोः

---

१ 'स्वव्यापारविषय. प्रयोजकव्यापारो णिजर्थः' इति गपुस्तके, खपुस्तके च 'स्वव्यापारे सर्वस्य कर्तृव्यापारविषय. प्रेरणादिव्यापारो णिजर्थ.' इति । २ 'इति न भव[ती]ति भावयतीति तुल्यार्थत्वम्' इति खगयोः पाठः । ३ 'तदित्य' गे । ४ 'शब्दगोचरः' गे ।

साध्यसाधनसम्बन्धस्याशाब्दत्वात् । ततश्च निमित्तप्रतिपादकमेव स्वर्गकामपद स्यात् । यः स्वर्गमिच्छति स याग कुर्यादिति । ननु चेष्यमाणत्वेनोपात्तत्वात्पुरुषार्थत्वाच्च स्वर्गस्य साध्यत्वमवगम्यते । ततश्चायं वाक्यार्थो भवति–'स्वर्गाय यागं कुर्यात्' इति, एवञ्च फलान्वयः सिद्ध्यति । तदेतदयुक्तम्, परस्परविरोधात् । यदि यागं कुर्यादिति विध्यर्थो, न स्वर्गायेति सम्बध्यते । अथ स्वर्गायेति संबध्यते, न तर्हि याग कुर्यादिति प्रधानरूपो यागो विधीयते । न च तस्य प्रमाणमन्तरेण स्वर्गार्थत्वमुचितम् । यन स्वर्गायेति वचन भवेत् । अथ स्वर्गार्थतैव यागस्य, न तर्हि यागं कुर्यादिति प्रधानविधिर्घटते । यागं कुर्यादिति स्वप्रधानो यागः प्रतीयते । स्वर्गार्थत्वे तु गुणत्वापत्तेः प्राधान्यानुपपत्तिः । लोके तु पाकमोदनाय कुर्यादित्युक्ते पाकमोदनार्थं कुर्यादित्ययमर्थोऽवगम्यते, प्रमाणान्तरावगम्यत्वात्साध्यसाधनभावस्य । वेदे तु शब्दैकसमधिगम्येऽर्थे यावद्वचनमवधारणमिति विशेषः । अथ साध्यत्वप्रतिपादनमुखेन यागस्योपायत्वमेव वचन विधत्ते न साध्यप्रतिपादन एव विधिः पर्यवस्यति । न ह्यपुरुषार्थे विधिः कारयति नियोज्यालाभात् । ततश्च स्वर्गाय याग कुर्यादिति चोदिते सत्ययमेवार्थोऽवगम्यते यागेन स्वर्गं कुर्यादिति । तेन सत्यामपि भावनाया धात्वर्थ एव वाक्यार्थ इति । एतदप्ययुक्तम् । यदि यजेत स्वर्गकाम इत्यस्य वाक्यस्य यागेन स्वर्गं कुर्यादित्येवपरत्वमवगम्यते ततो 'यत्परः शब्दः स शब्दार्थः' इत्यनेन न्यायेन यागकरणिका स्वर्गकर्मिका भावनैव वाक्यार्थ इत्यभ्युपगतं स्यात्, न त्वङ्गभूतो धात्वर्थः । प्रधानभूतविधानप्रयोजन हि वाक्यम् । तेन यद्यप्यभिधानतः कथञ्चिद्धात्वर्थस्य साध्यत्वमवगम्यते तथापि साधनत्वस्य विध्यर्थत्वात् यत्र साधनभावः स भावना नाम, प्रधानभूतोऽर्थो वाक्यार्थ इति । तथा च " सक्तून् जुहोति " इत्यत्राभिधानतः सत्यपि साध्यत्वावगमे साधनपरत्वाद्वाक्यस्य सक्तुभिर्जुहुयादिति वाक्यार्थो भवति । यदि चान्ततोऽपि धात्वर्थः साधन तत्प्रतिपादनपरञ्च वाक्य वक्तव्यं फलान्वयोऽस्त्विति ततो वरमादावेवाय वाक्यार्थो भवतु यागेन स्वर्गं कुर्यादिति, किं प्राधान्याभ्युपगमेन । न चात्र विस्पष्टसाध्यत्वमवगम्यते, येन तत्प्रतिपादनमभ्युपगम्येत । अनेन साधनभूतयागविधानात्तृतीयासमानार्थ एव विधिः । अतः किं साध्यत्वग्रहणे । तदुक्तम्—

'न केवलं तृतीयैव साधनत्वं नियच्छति ।
प्रमाणान्तरगम्येऽपि न किञ्चिद्विरुणद्धि सा ॥' इति ।

यदि च यजेतेत्यस्यायमर्थो भवति यागेन कुर्यादिति, तदा 'उद्भिदा' इति पदेन तृतीयान्तेन सह सामानाधिकरण्यं लभ्यते, नान्यथा । न चोत्तरकालीन-विध्याक्षिप्तसाधनत्वनिबन्धनं सामानाधिकरण्यं लभते । न चोद्भिदा यागं कुर्यादिति वैयधिकरण्यमपि युज्यते । साध्यसाधनभावस्य भेदाधिष्ठानत्वात् । उद्भित्पदस्य च यागनामधेयत्वेनाभिन्नार्थत्वात् । सामान्यविशेषयोश्च साध्यसाधनभावः पुरस्तात्प्रत्युक्तः । तेनोद्भित्पदमुभयभ्रष्टमेव भवत्पक्षे स्यान्न यजेतेत्याख्यातपदसमानाधिकरणम् । उद्भिदा यजेतेत्यस्य वाक्यस्य प्रथमं कीदृशोऽर्थः प्रतीयते ? न तावदुद्भिदा यागेन कुर्यादिति साध्यत्वप्रतीत्य-भ्युपगमात् । नाप्युद्भिदा यागं कुर्यादिति नामधात्वर्थयोरनन्यत्वात् । वैयधिकरण्ये च गुणविधित्वापत्तेर्दर्शनहानिः । तेन निश्चितकरणार्थत्व-तृतीयान्तोद्भित्पदसामानाधिकरण्यादप्येतत् निश्चितं यजते यागेनेति । एवं करणार्थतां प्रतिपाद्य भावार्थाधिकरणे धात्वर्थादपूर्वमिति प्रतिपादयता **सूत्रकारेण भाष्यकारेण** च यजेतेत्यस्यायमर्थो व्याख्यातो यागेन कुर्या-दिति । तेन करणार्थपदान्तरसामानाधिकरण्यावगमात्करणार्थमाख्यातमिति निश्चयोऽस्ति । तस्माद्भावनैवांशत्रयोपेता वाक्यार्थो न धात्वर्थ इति सिद्धम् । न करणार्थत्वे सत्याख्यातपदस्य "अग्निहोत्रं जुहोति" इति सामानाधिकरण्यं न घटते । यदि जुहुयादित्यस्यायमर्थो भवति होमं कुर्यादिति, तदाग्निहोत्रमिति द्वितीयान्तसामानाधिकरण्यं, नान्यथा । नन्वर्थाक्षिप्तकर्मत्वनिबन्धनमेतत्सा-मानाधिकरण्यं भवति । यथोक्तम्—

'आर्थं तत्रैव कर्मत्वं यत्र नाम्नाऽभिधीयते ।'

इति, तदयुक्तं, प्रागेव सामानाधिकरण्यावगमात् । एवं च सत्युद्भित्प-दस्यापि तृतीयान्तस्य विध्याक्षिप्तसाधनत्वनिबन्धनं सामानाधिकरण्यं केन वार्यते ? नैष दोषः । अग्निहोत्रमिति द्वितीया तृतीयार्थतां प्रतिपद्यते । उद्भित्पदस्य तु नैव कश्चिद्विरोधो विद्यत इत्यौत्सर्गिककरणार्थैव तृतीये-त्यस्ति विशेषः । एवमेव "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यधिकारवाक्येऽपि द्वितीया तृतीयार्थैव व्याख्यातव्या । तस्माद्धात्वर्थकरणिका सर्वत्र भावना

**कथं कर्मेति चेत्।**[1]

**अपेक्षितत्वाद्भाव्यस्य**[2] **कामशब्दा हि तत्पराः।**
**विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितम्॥**

**यद्यपि स्वर्गादयः पुरुषविशेषणत्वेन श्रूयन्ते, तथापि कामश्रुतयस्तत्प्रधानाः। "दण्डी प्रैषानन्वाह" "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इति दर्शनात्।**

विधीयते। नन्वसिद्धो यागः साधनत्वेन गोदोहनवत्कथमुपदिश्यते? नैष दोषः। साधनत्वमेवान्यथानुपपद्यमानं साध्यत्वमाक्षिपति। तेन विध्यसंस्पृष्टेऽपि साध्यत्वे स्वसाधनसाधितो यागः साधनं भविष्यति। साध्यत्वे तु विहिते न साधनत्वमर्थाद्भविष्यति। अ[तः] साधनाविधानमर्हति लिप्सात एव स्वर्गकरणे पुरुषस्य प्रवृत्तत्वात्। तथाह्यत्र वचनव्यक्तिर्दृश्यते—यः स्वर्गं कर्तुमिच्छेत् स यागेन त कुर्यादिति फलवदनुवाद्येव भावना। तस्मादुपायमात्रं विधीयत इत्यवगम्यते। नैतत्सारम्। प्रयोजकव्यापारो भावनेत्युच्यते। स च फलकर्मकस्तथा व्यपदिश्यते पुरुषार्थस्वर्गादिफलकर्मकत्वं च विधेयस्य नान्यथा विध्यभावे समानपदोपात्तयागकर्मत्वातिक्रमकारणाभावात्। तेन यद्यपि स्वर्गभावनायां लिप्सात एव पुरुषः प्रवृत्तस्तथापि यागानुरक्तप्रयोजकव्यापारस्य प्राग्विधेः स्वर्गभावनात्वमेवासिद्धमिति न तत्रेच्छातः प्रवृत्तिः सम्भवति। तेन विहितस्य यागानुरक्तप्रत्युक्तः(?)। तदास्तां तावदिदम्। प्रकृतमनुसरामः। ननु स्वर्गकाम इत्यत्र पुरुषविशेषणत्वेन स्वर्गः श्रूयते विशेष्यत्वेन पुरुषः। तेन विशेष्यपुरुषपरतैव कामिपदस्य युक्ता न विशेषणभूतस्वर्गपरता स्वर्गकामपदस्येत्याशङ्कते—**कथमिति**। परिहारमाह—**अपेक्षितेति**। श्येने ज्योतिष्टोमगतर्त्विक्प्रचरणानां प्रैषानुवचनादीनामतिदेशत एव प्राप्तत्वात् "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" "दण्डी प्रैषानन्वाह" इतिवचनं विशेषणभूतलोहितोष्णीषदण्डविधानार्थं गम्यते, तथात्राप्यन्यत एव पुरुषस्य प्राप्तत्वाद्विशेषणभूतस्वर्गपरता स्वर्गकामपदस्येत्यर्थः। एतदेव विवृणोति—**यद्यपीति**। कथं द्वितीयामन्तरेण भाव्यत्वप्रतीतिरिति चेत्? अत आह—

१ 'कथं कर्मेतिचेत्' इति नास्ति गपुस्तके, खपुस्तके च 'कथम्' इति वर्तते। २ 'भावस्य' इति खपुस्तके।

**कुतः ? भावनायां भाव्यस्यापेक्षितत्वात् । स्वर्गादीनां च काम्यतया भाव्यत्वप्रतीतेः द्वितीयान्तप्रयोगे इव तयापीष्टत्वप्रतिपादनात् । तेन पुरुषप्रतीतिः स्वर्गकामपदेऽनुवादः स्वर्गमित्येतावद्विधित्सितं भाव्यविशेषपरत्वात् । धात्वर्थस्य श्रौतस्यापि विधिज्ञानविरोधादकर्मत्वात् । करणत्वेपि श्रुत्यनुग्रहादविरोधात् । शास्त्राधीनत्वाद्योग्यायोग्यत्वयोरज्ञानात् । सर्वफलभावनानां धात्वर्थविशेषसाधनत्वात् ।**

[1] [2] [3] [4] [5] [6] [7]

**तयेति** । काम्यतयापीष्टं भाव्यं प्रतीयत इत्यर्थः । ननु समानपदोपादानलक्षणश्रुतिप्रतिपादितो धात्वर्थ एव भाव्यः प्रतीयते न पदान्तरप्रतिपादितः स्वर्गः । अतः कथं भाव्यविशेषपरत्वं प्रतिपाद्यते ? उच्यते, सर्वविधेयानां पुरुषार्थपर्यवसायिता विधीयते च भावनेति पुरुषार्थकर्मिका, विप्रतिषिद्धमेतन्नियोगप्रतिपादनं नियोज्यानुपपत्तेः । तस्माद्वाक्यप्रतिपादितोऽपि पुरुषार्थत्वेन स्वर्ग एव भाव्य इत्यर्थः । श्रुतिस्तर्हि वाक्येन बाधिता स्यादित्याशङ्क्याह—

**करणत्वेऽपीति** । न 'यजेत' इति श्रुतेर्यागः कर्मत्वेन प्रतीयते यागं कुर्यादिति । किं तर्हि ? स्वरूपमात्रेण पूर्वोक्तन्यायेन च करणत्वे धात्वर्थस्योच्यमानेऽनुगृहीतैव श्रुतिस्तदुपात्तयागानतिक्रमात् । एवं चाविरोधो विध्याविरोधो भवति नान्यथेति । नन्वसिद्धात्मकत्वेन धात्वर्थो न करणत्वयोग्य इत्याशङ्क्याह—

**शास्त्राधीनत्वादिति** । शास्त्रनिवर्तमानमयोग्यतां सूचयति प्रवर्तमानं च योग्यतामिति शास्त्राधीनत्वमुभयोः । शास्त्राधीनत्व एव योग्यत्वस्य कारणमाह—

**अज्ञानादिति** । ननु यागादेः फलभावनासाधनत्वमलौकिकं शास्त्रमात्रायत्तकल्पितमित्यत आह—**सर्वेति** । ओदनादिफलकर्मिकाऽपि भावना पाकादिधात्वर्थकरणिका दृष्टेति या[ग]स्याप्यपूर्वभावनासाधनत्वं नालौकिकम् । शास्त्र-

१ 'भावनायाभावस्य' इति खपुस्तके । २ 'साध्यत्व' इति कपुस्तके । ३ कपुस्तके 'काम्यतया' इति पाठः । ४ 'कामादि' गे । ५ 'श्रौतस्यापितविधिविज्ञानविरोधादकर्मता' गे । ६ 'करणत्वेहि' इति खपुस्तके । ७ 'योग्यत्वयोः' क०

**स्यान्मतं स्वर्गादिविशेषणपरत्वेऽपि[1] गुणाभावः[2] स्वर्गादेः स्यात् । न, भाव्यस्य प्रथममपेक्षणात् । साधनेषु चोपचारादिच्छायाः । ननु न[3] भाव्यभेदप्रतिपत्ति-[4]प्रधानाः कामश्रुतयः, अपि तु नियोज्यविशेषणप्रतिपादनपराः । अन्यथा कस्यायमुपदेशः को नियुज्यते कस्येदं कर्तव्यमित्यपरिज्ञानात्सापेक्षमपरिसमाप्तमप्रतिपत्तिकरमेव शास्त्रं स्यात् । नैतत्सारम् । यतः—**

**प्रतीयते नियोगोऽर्थात्समर्थस्य फलार्थिनः ।**
**अन्यथा ह्यसमर्थानां दुर्वाराऽधिकृतिर्भवेत् ॥**

मात्रायत्त शास्त्रस्यापि प्रमाणत्वेनाभ्युपगमात् नालौकिकत्वमित्यर्थः । ननु यद्यपि स्वर्गपरत्वेन स्वर्गकामपदस्य भावनाया कारकत्वेन स्वर्ग सबध्यते, तथापि वेदनादिद्रव्यस्य स्वर्गशब्दाभिधेयस्य भावना प्रति करणत्वेन गुणत्वमुचितं न कर्मत्वलक्षण प्राधान्यमिति चोदयति—**स्यान्मतमिति ।** तत्र परिहारमाह—**नेति** । किं भावयेदिति प्रथममपेक्ष्यते । स्वर्गश्च प्रीत्यात्मकत्वेन पुरुषार्थत्वात्तदपेक्षापूरणसमर्थो भाव्यत्वेन सबध्यत इत्यर्थः । यदि च करणत्व स्वर्गस्याभ्युपगम्यते ततोऽस्य कामपदोपादानमयुक्त स्यादित्याह—**साधनेष्विति** । भाव्यमेव स्वरसात्काम्यते न करणादिसाधनमपुरुषार्थत्वात् । नन्वर्जनाङ्गत्वेन साधनमपि काम्यते । बाढ काम्यते, साध्यगतेच्छा साधनेषूपचर्यते । न च स्वर्गेऽन्यगतोपचार पश्याम । तस्मात्स्वरसात्स्वर्ग एव काम्य इति तस्यैव भाव्यत्वम् । ननु फलपरत्वे स्वर्गकामपदस्य नियोज्यानुपादानात् स्वपदोपात्तयागकर्मत्वातिक्रमकारणाभावाद्यद्यपि स्वर्गभावनायां लिप्सात एव पुरुषः प्रवृत्तस्तथापि नियोज्यानुपादानाद्यजेतेति कस्येद कार्यमुपदिष्टम् इत्यज्ञानात्सापेक्षमसमर्थसमर्पितनियोज्य शास्त्रमप्रमाणं स्यादिति चोदयति- **नन्विति** । तत्र परिहारमाह—**नैतत्सारमिति ।** यः स्वर्गादिफलार्थी नियोग तद्विषयञ्च साङ्गं कर्मप्रयोगं बोद्धुमनुष्ठातुं च

[1] ' विशेषपरत्वे ' इति पाठः खपुस्तके । [2] ' गुणाभाव एव ' गे । [3], 'न' शब्दो नास्ति खे गे च । [4] ' प्रतिपत्तिपरा ' गे । [5] ' विशेष ' इति कपुस्तके ।

**योऽपि हि शब्दान्नियोज्यविशेषावसायं मन्यते, सोऽपि नियोज्यविशेषप्रतिपत्तौ सामर्थ्यमुपैति । अन्यथा शब्दवशेन शक्तिकल्पनायामन्धादीनामप्यत्रार्थेऽधिकारः स्यात् । सत्यपि चेच्छब्दे सामर्थ्यमुपाश्रीयते, नियोज्यावगमे तदसत्येवास्तु । तस्माद्यो नियोगार्थं प्रतिपत्तुं तद्विषयं चानुष्ठातुं समर्थः फलार्थी च स नियोज्यः, असमर्थस्यानर्थिनोऽशक्येऽनभिलषिते यागे प्रवर्तनायोगात् ।**

**किञ्च ।**

समर्थः स नियोज्य इत्यर्थसिद्धमेतत्, किमत्र शब्देनेत्यर्थः । यदि तु सामर्थ्यमतन्त्रीकृत्य शब्दमात्रनिबन्धनो नियोज्योऽभिधीयेत ततोऽन्धादीनामप्याज्यावेक्षणाद्यसमर्थानां स्वर्गकामत्वाविशेषादधिकारः स्यादित्याह— **अन्यथेति** । अमुमेव श्लोकं विवृणोति—**योऽपीति** । एतदुक्तं भवति — आख्याताभिहितभावनायां तावदाक्षिप्त एव कर्ता कीदृशो नियुज्यते इत्यपेक्षायां भावनाविषयाक्षिप्तानूद्यमानपुरुषविशेषणभूतस्वर्गोत्पादनसमर्थस्यावश्याभ्युपगमनीयत्वाद्यः फलार्थी समर्थश्चेति लभ्यत एव । न च विषयाक्षिप्तो विधिमन्तरेण प्रवर्तते । प्राग् विधेः श्रेयःसाधनत्वानवगमात् । तेन प्रवृत्तिक्रियत्वं तावद्वाच्यम् । न च प्रवृत्तिपर्यन्त एवाक्षेपो येन प्रवृत्त्युत्तरकाले स विलीयेत । साङ्गप्रधानानुष्ठानार्थत्वेन शब्दनिरपेक्षतदात्मलाभावगमात् । अपि च क्रियया कर्तुरन्यथाऽसिद्ध्या प्रतिपादनमाक्षेपः । तत्र चार्थादाक्षेपे प्रवृत्तावपि को विरोधः ? कर्तृमात्रचोद्यं परिहृतमेव । शब्देन नियोज्यसमर्पणे विरोधः स्यादेव, कर्तृमात्रचोद्यमप्यपरिहृतं स्यात् । अभ्युपगन्तव्यश्च कर्तृविशेषाक्षेपोऽन्यथाऽप्राप्तत्वेन तदभिधानप्रसङ्गात्कर्त्रधिकरणसिद्धान्तः प्रत्युद्ध्रियेत । तदास्तां तावदिदं बालभाषितम् । प्रकृतमनुसरामः । इतश्च फलपराः कामश्रुतय इत्याह— **किञ्चेति ।**

१ 'शब्दा' गपुस्तके । २ खपुस्तके 'स्यात्' शब्दो नास्ति ३ 'सामर्थ्यमुपैति तदसत्येवास्तु' ग पाठः । ४ 'पत्तु विषयम्' इत्येव खपुस्तके पाठः ५ 'च नियुज्यते नियोज्य.' इति पाठः खपुस्तके । ६ 'चार्थे' गपाठः । ७ खपुस्तके 'किञ्च' शब्दो नास्ति ।

**अतत्परत्वे फलता पश्वादेर्नास्ति शब्दतः ।**
**न सामर्थ्यादनुष्ठानं नियोगैकनिबन्धनम् ॥**

**यदि स्वर्गकामादिश्रुतयो न फलभेदाधिगमपराः,[1] न शब्दवती फलता पश्वादीनां स्वर्गादीनाञ्च[2] । नापि सामर्थ्यतः[3] । अन्यथानुष्ठानमयुक्तमिति[4] चेत् ? न, तस्य नियोगमात्रायत्तत्वाभ्युपगमात् । एकवाक्यत्वमिति[5] चेत् ? को विरोधः ? अन्यादिच्छत्यन्यत् करोतीति[6]**

ननु नियोगसामर्थ्यादेव फलं प्रतीयते किमत्र शब्दोपादानेन । न ह्यसौ निष्फले कर्मणि नियोज्यं लभत इत्याशङ्क्याह—**न सामर्थ्यादिति** । यद्यसौ निष्फले कर्मणि नियोज्यं न लभत हन्त तर्हि नित्येऽग्निहोत्रादावनङ्गीकृतफले नियोज्याभावः स्यादित्यर्थः । नन्वनुष्ठानमेव फलं विनाऽनुपपद्यमानं फलमाक्षिपतीत्याशङ्क्याह—**अनुष्ठानं नियोगैकनिबन्धनमिति** । नियोगनिबन्धनमनुष्ठानं, न फलनिबन्धनमिति भवता दर्शनम् । अत एव निष्फलस्यापि नित्यस्य कर्मणोऽनुष्ठानमङ्गीकृतं भवता । तत्र पूर्वार्धं तावद्विवृणोति—**यदीति** । न सामर्थ्यादिति यदुक्तं तद्विवृणोति—**नापीति** । अनुष्ठानं नियोगैकनिबन्धनमिति यदुक्तं तद्विवरणायाशङ्कते—**अन्यथेति** । समाधत्ते—**न तस्येति** । ननु स्वर्गकामो यजेतेत्येकवाक्यत्वमनयोः पदयोर्गम्यते तच्चैवमुपपद्यते यदि यागानुष्ठानेन स्वर्गः क्रियते । यदि तु स्वर्गकामो यागमात्रं कुर्यात्ततः परस्परनिरपेक्षत्वेन भिन्नार्थत्वेनैकवाक्यत्वं न स्यात्स्वर्गमिच्छति यागञ्च करोतीत्यसम्बद्धमेव स्यात् । तस्मात्साध्यसाधनविशिष्टो नियोगः शब्दार्थ इति चोदयति—**एकवाक्यत्वमिति** । तत्रागृहीतपराभिप्रायो गूढाभिप्रायो वा परिहारमाह—**क इति** । परः स्वाभिप्रायं प्रकटयति—**अन्यदिति** । स्वर्गमिच्छति यागं करोती-

१ 'भेदाधिगम' इति खपुस्तके गपुस्तके तु एतन्नास्ति । २ खपुस्तके 'स्वर्गादीनाञ्च' इति नास्ति, गपुस्तके च 'पश्वादीनाम्' इति नास्ति । ३ 'अन्यथा नियुज्यमानाभावात्, अन्यथा' इति खपुस्तके, गपुस्तके च 'अनुपपद्यमानाभावात्' इत्यधिकः पाठः । ४ 'न नोपपद्यते' इति गे । ५ खपुस्तके 'एक' शब्दो न दृश्यते । ६ 'करोतीति चेत् । अत' इति कखयोः पाठः ।

स्वर्गकामो यागं कुर्य्यादित्ययमेव विरोधः। अत एव तर्हि न पुरुषविशेषपराः स्वर्गकामादिश्रुतयः, फलपरास्तु[१] सन्तु।

अपि च—

नियोगपरतन्त्रस्य पुरुषस्यान्यदिच्छतः।
अन्यक्रिया[२] विरुद्धेति न नियोगप्रधानता॥

अन्यदिच्छन्नन्यत् करोतीति विरुद्धमिति वदतो नियोगप्राधान्यं हीयते फलार्थिताहेतुत्वान्नियोगस्य। अपि च नियोगसामर्थ्या[३]दन्यदिच्छतामन्यक्रिया परतन्त्राणां दृष्टा। साध्य[४]स्यैव विशेषणत्वादिति चेत्?

त्ययमेव वाक्यविरोधः स्पष्टः। एवमुक्ते सिद्धान्तवाद्याह—अत एवेति। यद्यसाध्यत्वे स्वर्गस्य सत्येकवाक्यत्वं विरुध्यते हन्त तर्हि फलसमर्पक स्वर्गकामादिपदमस्तु, पुरुषपरत्वे स्वर्गकामपदस्य स्वर्गसाध्यत्वं नावगम्यत इत्यर्थः। अपि चान्यदपीच्छन्तोऽन्यत्कुर्वन्त. परतन्त्रा नियुक्ता दृश्यन्ते। यथा स्वप्तुमिच्छन्तो गच्छन्त्वित्युक्ता गच्छन्ति। तथा स्वर्गमिच्छन्यजेतेति नियुक्तो नियोगपरतन्त्रो यागं करिष्यति। तेन विरोधोऽपि नातीव दृश्यत इत्याह—अपि चेति। नियोगपरतन्त्रस्यान्यदिच्छतोऽन्याक्रिया दृष्टेति ग्रन्थयोजना। यदि चान्यदिच्छतोऽन्यक्रिया नियुक्तस्यापि विरुद्धेत्युच्यते, तथा सतीष्यमाणफलहेतुकमनुष्ठानमिति नियोगप्राधान्य हीयत इत्याह—विरुद्धेतीति। तत्रोपरितनं तावद् दूषणं विवृणोति—अन्यदिति। आद्यं दूषणमिदानीं विवृणोति—अपिचेति। ननु स्वर्गविशिष्टः पुरुषो नियोगेन नियुज्यते—'यजेत स्वर्गकामः' इति, न तु पुरुषमात्रम्। तदेवं सिद्ध स्वर्गस्य साध्यत्वमिति न नियोगस्य प्राधान्यं हीयते नाप्यसाध्यत्व स्वर्गस्येति चोदयति— साध्यस्यैवेति। तत्र परिहारमाह—नियोगेति।

---

१ खगपुस्तकयोः 'तु' शब्दो न दृश्यते। २ 'क्रियाऽस्य' इति खपुस्तके। ३ 'दन्यदपीच्छ' इति खपुस्तके। ४ 'भाव्यस्यैव सतो' गपुस्तके।

**नियोग[1]विषयसम्बन्धः कुतः? क्रियान्तरसाध्य[2]स्यापि विशेषणत्वात्। इच्छामात्र[3] प्रवृत्तिदर्शनाच्चायुक्तमेवैतत्। नन्वेवं नैमित्तिकत्वादग्निहोत्रादीनां नित्यत्वव्याघातः। अयम[4]परो दोषोऽस्तु [5]नियोज्यविशेषणपरात्स्वर्गपदा-**

नियोगविषयो यागः, तेन सह स्वर्गस्य साध्यसाधनसम्बन्धः कुतः कस्मादि-त्याह—**क्रियान्तरेति**। अतिक्राम जुहोति गच्छन् पठेदिति लोकवेदयोर्न विषयहोमपाठसाध्यमतिक्रमणं गमनं वा नियोज्यं विशिनष्टि। किन्तर्हि? पुरुषप्रयत्नरूपक्रियान्तरसाध्यम्। अभ्युपगमवादमात्रं चैतत्। परमार्थतस्तु न स्वर्गकामपदात्साध्यस्वर्गविशिष्टः पुरुषः प्रतीयते। स्वर्गेच्छामात्रे स्वर्गकामपदप्रवृत्तेरित्याह—**इच्छामात्रे इति**। ननु स्वर्गो मे भवेदित्येव यः कामयते स स्वर्गकाम इत्युच्यते। यदेकान्तेन भवितव्यं तद्भवेदित्यस्यार्थः। न चासावसाधितो भवतीति साध्यैव [ध्यत्वे] विशेषणत्वमवगम्यते। नैतद्युक्तं भवेदितीष्यत एव केवलम्। न च भवति भवनप्रमाणाभावात्। तेनैव काम-यमानो नियुज्यत इति निमित्तपरमेवेदं स्यात्। न च नियोगः फलसापेक्षो येनेष्यमाणसाध्यत्वमापादयेन्नियोज्यमात्रापेक्षणात्। अत्र चोदयति—**नन्वेवमिति**। फलमसाधयतोऽग्निहोत्रस्यानुष्ठानं "यावज्जीवमग्निहोत्रं जुहु-यात्" इत्येनेन सिद्धमित्ययं कामविधिरनर्थकः स्यात्। अथ कामनाया निमित्तं विधीयते तथापि तेन व्यापिना सति चासति च निमित्ते विधानादनेन सामान्यतः प्रवृत्तोऽसावुपसंहर्तव्य इति नित्यत्वमग्निहोत्रस्य व्याहन्यते। स च विधिरनर्थकः स्यात्। तदेतन्माभूदिति स्वर्गार्थिनः स्वर्गसिद्धये भूयोऽनु-ष्ठानं विधीयते इति नित्यत्वं न विहन्यते। न च किञ्चिद्वचनमनर्थकं भवतीति। अत्र परिहारमाह—**अयमपर इत्यादिना**। फलनिर्देशपरे कामपदे नैष दोषः प्रसज्यते, नियोज्यपरे तु भवति। न चैव वचनमनर्थकं मा भूदित्यशब्दार्थः परिकल्पयितुं शक्यते, शब्दप्रमाणके। ता तु

---

१ 'न, नियोगविषयासम्बन्धात्। ततः' गपुस्तके, खे च 'नियोगविशेष' इति पाठान्तरम्।
२ 'भाव्यस्यापि' गे। ३ 'मात्रप्रवृ' इति खगपुस्तकयोः। ४ 'मपरोऽस्य' गपुस्तके। ५ 'ननु नियोज्यपरात् फलप्रतिपत्तिः' इति खपुस्तके पाठो गपुस्तके तु 'न नियोज्यविशेषणपरात् फलं' इति पाठः।

**त्फलप्रतिपत्तिः । ननु च[1] स्वर्गकामस्य यागः कर्तव्यो-ऽवगम्यते कथं स तस्य[2] कर्तव्यो यदि न तं सम्पादयति। न, गृहदाहवत इवेच्छावतः[3] किञ्चिदसंपादयतोऽपि कर्तव्यता स्यात् । यदि[4] ह्यसंपादयति स्वर्गं यागं पुरुषः[5] प्रवर्तते न तर्हि स्वर्गकामः । न, निमिषितादिष्वतथा-भूतेष्वपि प्रवर्तमानस्य[6] स्वर्गकामत्वाविघातात् । हेत्व-न्तरात्तत्र प्रवृत्तिरिति चेत् ? इहापि नियोगादिति न[7]**

वचनस्य व्यक्तिमपास्य व्यक्त्यन्तरमाश्रीयते। पुनरपि नियोगप्राधान्यवादी चोदयति—**ननु चेति**। "आरोग्यकामः पथ्यमश्नीयात्" इति श्रुतः पथ्या-शनमारोग्यं करोतीत्यवगम्यते, "ज्वरितो भेषजं भुञ्जीत" इति भेषजोपयोगो ज्वरं निवर्तयतीति, एवं 'स्वर्गकामो यजेत' इति यागमनुतिष्ठतः स्वर्गो भवतीति शब्दादेवावगम्यते । अत्र परिहारमाह—**न गृहेति**। "अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याहिताग्नेरग्निर्गृहान्दहेत्" इति गृहदाहवत. क्षामवती कर्तव्यत्वेन विधीयते, न चासौ तया किञ्चित्करोतीति । द्वे च तस्य तदानीं विशेषणे गृहदाह आहिताग्निता च । ते तावन्न करोति । न चान्यदपि किञ्चिन्नियोगप्राधान्यवादिनस्तथा भावनीयमभ्युपयन्तीति । पुनरपि चोदयति—**नन्विति**। यो हि यत्कामयते स तत्साधन एव प्रवर्तते न यत्र क्वचित् । तद्याद यागे प्रवर्तते, स्वर्गसाधनं तर्हि यागः। न चेत्स्वर्गसाधनं, तर्हि न स्वर्गकामः प्रवर्तते । अत्र परिहारमाह—**न निमिषितादिष्विति**। स्वर्गकामो हि न केवलं यजत एव किन्तर्हि निमिषत्युन्मिषति हसति जल्पति विश्राम्यति भुङ्क्ते चेति। न च तान्यस्य स्वर्गं साधयन्ति। न च तेषु प्रवर्तमानस्य स्वर्गकामिता विहन्यत इति । पुनरपि नियोगवादी प्रत्यवतिष्ठते—**हेत्वन्तरादिति**। न हि खलु स्वर्गकामनया निमिषितादिषु प्रवर्तते । किन्तर्हि ? हेत्वन्तरात्सर्वपुरुषसाधारणादिति। अत्रोत्तरमाह—**इहापीति**।

---

१ खपुस्तके 'च' नास्ति, गपुस्तके च 'नन्वेवम्' इति पाठः। २ कपुस्तके 'तस्य' नास्ति। ३ 'इव जीवतः' कखपुस्तकयोः। ४ 'तर्ह्यसं' नास्ति कपुस्तके, खपुस्तके च 'ननु तर्ह्यसं' पाठः। ५ 'पुरुषः' खपुस्तके नास्ति, गपुस्तके 'स्वर्ग यागे पुरुषः' नास्ति। ६ खपुस्तके 'प्र' शब्दो नास्ति, गपुस्तके च 'भूतेष्वेव प्रव' इति पाठः। ७ 'न' शब्दो नास्ति ग०

**दोषः । स्यादेतत् स्वर्गसिद्धाविच्छापगमे नियोगनिष्पत्तिरन्यथा कृतयागो[1]ऽपि नियोज्य एव स्यान्न[2] कृतनियोगः । अतो[3] नियोगार्थनिष्पत्तिसामर्थ्यात्स्वर्गादिसिद्धिप्रतीतिः । न, विषयसिद्ध्या नि[4]योगार्थनिष्पत्तेः**

नियोगेन हि यागे प्रवर्तते न तु फलकामनयेति । ननु च स्वर्गकामो यागे नियुज्यते । नरस्य च कामनिवृत्तौ नियोगो निवर्तते इति । अनिवृत्तकामस्तु नियोज्य एव स्यान्न तु निवृत्तनियोगः । काम्यावाप्तौ च कामना निवर्तते । तद्यदि यागेऽनुष्ठिते काम्य सम्पद्यते ततः कामना निवर्तते नान्यथेत्याह—**स्यादेतदिति** । यावदस्य कामनाऽनुवर्तते तावन्नियोज्य एव भवति, न कृतनियोगः । निवर्तते चास्य यागे कृते नियोगः । कामनानिवृत्त्या चासौ निवर्तते । तदाख्यातनियोगनिर्वृत्तिसामर्थ्यात्काम्यमस्य यागमनुतिष्ठतः सिद्धमित्यवगम्यते । निवर्तते हि कामाधिकारेषु कृतकर्मणः कामना, 'सिद्धो मे नियोगः' इति च तदानीमसौ जानातीति । एतत्परिहरति—**न विषयेति** । स्वर्गकामो यजेतेति नियुज्यते यागेन स्वर्गं कुर्यादिति । तस्य यागं कर्तुं नियुक्तस्य यागे कृते नियोगो निवर्तते । यदि हि स्वर्गो विषयमनुप्रविशेत्ततस्तावतो विषयत्वाद्विषये च नियोगाद्विषयसिद्धौ च नियोगसिद्धेर्नियोगसिद्धिसामर्थ्येन स्वर्गसिद्धिरवगम्येत । स तु नियोज्यविशेषणत्वात्तस्य च विषयादन्यत्वान्न विषयमनुप्रविशतीति न तत्सिद्धिपर्यन्ता विषयसिद्धिः । तस्मादसिद्धेऽपि स्वर्गे विषयसिद्ध्यधीनसिद्धिः सिध्यत्येव नियोग इति । यदि विषयसिध्यतिरिक्तं नियोगसिद्धौ निमित्तमिष्यते ततो गृहदाहादेर्निमित्तत्वाद्विहितस्य कर्मणोऽनुपरमः स्यात् निमित्तस्यानुवृत्तेः । दग्धं हि गृहं निमित्त न दह्यमानम् । तदस्य गृहदाहकृतस्य निमित्तस्य सर्वदाऽनुवृत्तेर्न कदाचिदपि नियोगसिद्धिः स्यादिति । यावज्जीवं क्षामवतीमनुतिष्ठेन्न कदाचिदप्युपरमेदिति । अथवा गृहदाह आदिर्यस्याः सा गृहदाहादिः क्षामवती

---

१ 'अन्यथाऽकृतनियोगोऽपि' कखयोः । २ 'नाकृत' इति खपुस्तके । ३ 'अता नियोगः । अता' ख० ४ 'नियोगनिष्पत्तेः' गपुस्तके ।

स्वर्गादेश्च नियोज्यविशेषण[1]त्वेनाविषयत्वात् । अन्यथा गृहदाहादेरप्यनुपर[2]मप्रसङ्गः । तस्मात्फलपराः स्वर्गकामादिश्रुतय इति मनोहरम् ।

([3] इति आर्यमण्डनस्य कृतिर्भावनाविवेकोऽवसितः ।
श्रीरस्तु । )

आदिरस्या गृहदाहस्तस्मिन्सति तद्विधानादिति । तदेतदाह—**अन्यथेति** ।
प्रकृतमुपसंहरति—**तस्मादिति** ।

इति श्रीमद्भट्टोम्बेकविरचिता भावनाविवेकटीका संपूर्णा ॥

---

१ 'विशेषणपरत्वेन' गपाठः । २ 'परमप्रसङ्गः' इति खपुस्तके, गपुस्तके च 'गृहदाहादेरप्रसङ्गः' इति । ३ कखयोः कंसान्तर्गतो ग्रन्थो नास्ति ।



## Readings in Manuscript 'ग' as compared with those in the present text ( pp. 1–88 )

| Readings in the printed text | Different readings | Page | Line |
|---|---|---|---|
| तथा ह्याहुः | नास्ति | 2 | 1 |
| तेन स भावना | तेन सा भावना | ,, | 8 |
| तदर्थभेदा | तदर्थविशेषभेदा | 3 | 1 |
| शिंशपादिशब्द | शिंशपाशब्द | ,, | 3 |
| तदर्थभेदा | तदर्थविशेषभेदा | ,, | 10 |
| मात्रस्यात्र जिज्ञासनाद्धा | मात्राभिधानाद्धा | 4 | 8 |
| क्रियावचनो धातुः | क्रियावचना धातव | 5 | 7 |
| करोतिसामा | करोतिना सामा | ,, | 8 |
| वचनाः पच | वचनाश्च पच | ,, | 10 |
| सर्वेण | सर्वत्र | ,, | 11 |
| किञ्चिदसज्जन्यते | किञ्चिदुपजन्यते | ,, | 12 |
| भाव्यभवन | फलभवन | 6 | 3 |
| एवं चेन्न | एवं चैतन्न | ,, | 6 |
| व्यापारान्तरमु | व्यापारभेदमु | ,, | 7 |
| यम् | यत् | ,, | ,, |
| वक्तव्यः स | वक्तव्यः | ,, | 12 |
| धात्वर्थस्तथाविधत्वमाति | धात्वर्थ विधिमिममाति | ,, | 14 |
| स्पन्दस्तदा तदात्मना | स्पन्दस्तदात्मनां | 7 | 1 |
| अस्पन्दमानसाधनेषु | अपरिस्पन्दमानकर्तृकेषु | ,, | 3 |
| व्यापारो योऽपि भावना | व्यापार योऽपि भावनां | ,, | 5 |
| प्रयत्नादिशब्दप्रवेद | प्रयत्नशब्दसंवेद | 8 | 4 |

| Readings in the printed text | Different readings | Page | Line |
|---|---|---|---|
| अग्निर्ज्वलति । अपि च | अग्निर्ज्वलति इति । न च 'शृणोति ग्रावाण.' इतिवद् धर्मारोपेण प्रयोगः, प्रत्ययस्यावैलक्षण्यात् । न रथो गच्छति, करी गच्छतीति प्रत्ययो विशिष्यते । अपि च | ,, | 6 |
| न पर· | न परं | 9 | 1 |
| पवर्गात् | पवर्गीति | ,, | 2 |
| साधनप्रयत्न | साधनाप्रयत्न | ,, | 6 |
| अपूर्वं तु | अपूर्वस्तु | ,, | 7 |
| अन्यथाव्यापार | अन्यथाकारकव्यापार | 10 | 1 |
| स स कर्म | स कर्म | ,, | 9 |
| किञ्चिद्भव | कथञ्चिद्भव | 11 | 1 |
| कल्प्यते | कल्प्येते | ,, | 6 |
| यथा | यथा । न च तथा प्रतीयते । | 13 | 4 |
| र्थताऽपेक्षित सं | र्थताऽपेद्यते सं | ,, | 11 |
| कारकाणां | करणानां | 14 | 4 |
| कारकान्तरेण | करणान्तरेण | ,, | 5 |
| कारकान्तरा | करणान्तरा | ,, | 6 |
| नन्वस्ति तावत् | नास्ति | 16 | 1 |
| पुनर्भवान् | किं पुनर्भवान् | ,, | 4 |
| प्रभावन. । योऽपि | प्रभावन· । व्यापारं फलभेदं च व्यापारो दृश्यतेऽन्तरा । योऽपि | ,, | 12 |
| न प्रत्ययार्थः | नास्ति | ,, | 14 |
| यार्थनियोगकर्माणि | यार्थकर्माणि नियोज्ये | 18 | 7 |

| Readings in the printed text | Different readings | Page | Line |
|---|---|---|---|
| मीत्तमाणेनेद | मीत्तमाणो नेद | 19 | 2 |
| न, पुरुष | न, अपुरुष | ,, | 5 |
| भिधानावहेतुत्वात् | भिधानाभावहेतुत्वात् | ,, | 8 |
| नानार्थत्वं | नास्ति | 20 | 9 |
| व्यापारदृष्टश्च | व्यापार दृष्टश्च | 22 | 1 |
| एव हि | एवं हि | ,, | 10 |
| करणमिति क्रियाकारकव्यतिरिक्तेऽर्थे पचयादिषु प्रत्ययः। यतः | करणमिति पचयादिषु क्रियाकारकव्यतिरिक्तोऽन्वेति। यतः | 23 | 6 |
| मन्दादिश्च | मन्दादिषु तु | ,, | 9 |
| रन्यो व्यापारश्चलतीति लक्ष्यते | रन्यो विशेषो लक्ष्यते | 25 | 11 |
| चलत्वात् स्थितोऽपि | चलित्वा स्थितोऽपि | 26 | 1 |
| तद्गोचरपदार्था | तद्गोचरः पदार्था | 27 | 3 |
| प्रबन्ध. स्थित: | प्रबन्धे स्थिते | ,, | 5 |
| हार्यादेशसंगमाः | हार्योद्देशसंगमान् | 28 | 7 |
| अप्रत्यक्षत्वे | प्रत्यक्षत्वे | ,, | 8 |
| नियतप्रत्ययो | नास्ति | 29 | 2 |
| च्यमानात्माक्रियापदार्थ ,यः | च्यमाना इति च। य | 35 | 9 |
| इति तत्र | इति न तत्र | 36 | 8 |
| तद्धेतोर्न तस्य | तद्धेतोस्तस्य | 37 | 2 |
| मेष परिकल्पननिमित्तो वाक्यार्थो | मेष कल्प्योऽपरिचितो वाक्यार्थो | 38 | 3 |
| निर्देशात् विशे | निर्देशात् पुरुषविशे | 39 | 1 |
| अनुपसंहारे त्वेतत् स्यात् | अनुपसंहारे विशेषणश्रुतेरेतत् स्यात् | ,, | 5 |
| मानविशेषाया | मानस्फुटविशेषायाः | 16 | 2 |

| Readings in the printed text | Different readings | Page | Line |
|---|---|---|---|
| र्थस्य करणतैव कर्मता | र्थस्य साधने तव कर्मता | 47 | 1 |
| भिद्यते नवेति। को हि | भिद्यते न पाको हि | 48 | 4 |
| मवजानीते तथाहि तिङन्ते भाव्यः | मवजानीते। अङ्गीकुर्मः प्रत्ययभेदं पचतीति भाव्यः | ,, | 4 |
| न तथाभूतो घ | न तथा घ | ,, | 5 |
| इत्यत्राप्रसङ्गात् | इत्यत्रापि प्रसङ्गात् | ,, | 12 |
| न दृश्यते | हि दृश्यते | 49 | 2 |
| शब्दतत्त्वज्ञैः | शब्दवृत्तिज्ञः | ,, | 3 |
| नाप्रतिपद्य | न प्रतिपद्य | ,, | 4 |
| पाकस्था | पाकस्या | ,, | 6 |
| सिद्धभावना | सिद्धभावेना | 51 | 4 |
| अर्नाभभवति चेत्या | अनभिभव्यन् पचत्या | ,, | 5 |
| शक्यम् | शक्यनिरूपणम् | ,, | 9 |
| घदर्शनं | नास्ति | ,, | ,, |
| फलभवनसमर्थो | फलभावनासमर्थो | 52 | 2 |
| धात्वर्थाभेदा | धात्वर्थभेदा | 55 | 5 |
| योज्यो न | योगो न | 58 | 2 |
| षणं वा यत्तत् | षणं वा युक्तं यत्तत् | 59 | 3 |
| ज्ञायमान | यजमान | ,, | 6 |
| भावाभिधायिनौ | नास्ति | 59 | 7 |
| संकल्पमात्रं | नास्ति | ,, | 8 |
| तिङा | लिङा | 62 | 5 |
| न चैकमवकल्पते | न वै कर्म च कल्पते | 67 | 2 |
| दायस्य शब्दोपात्तत्वात् | दायस्याधिकत्वेनोपादानात् | 68 | 8 |
| रणान्तरस्य | रणत्वात् | 76 | 4 |
| करणमेव | करणतैव न | 78 | 1 |
| वस्त्वन्तरायाः क्रियाया | वस्त्वन्तरानन्तरीय | 79 | 9 |

| Readings in the printed text | Different readings | Page | Line |
|---|---|---|---|
| नान्तरीय | | | |
| भेदाद्भिन्ना धात्वन्तराद्गतेः | भेदाद्द्विधा धात्वर्थसंगतिः | 80 | 13 |
| न भवतीति | न भावनेति | 81 | 3 |
| से झाटाति विद्युतिक्रियाप्रत्य | सादू भीतिविच्छित्तिक्रिया-प्रत्य | 85 | 11 |
| स्वर्गादि चान्यसाध्यं | स्वर्गादि वानुगतं साध्यं | 86 | 5 |
| तादूरूप्यं | कर्तृत्वं | 87 | 2 |
| परशुतिष्ठितं (?) निपातो-द्यमनादि | परशूद्यमननिपतनादि | 88 | 1 |